Digitized by Arya Samaj Foundation Chennai and eGangotri

१८४२ शकीये } चैत्र

080513

{ ३य वर्षे ११श संख्या




080513

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम् ।

सम्पादकः—

श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः ।

सहकारिसम्पादकः—श्रीकालीपदतर्काचार्यः ।

ऋते ज्ञानान्न मुक्तिः
पुस्तक सं० संस्कृत...
आगत सं० ...
तिथि० ...
गुरुकुल ग्रन्थालय काँगड़ी

—:*:—



पुस्तकालय गुरुकुल कांगड़ी

—•—

प्रिण्टार—श्रीकुलचन्द्र दे, शास्त्रप्रचार प्रेस, ५नं छिदामसुदिर लेन, कलिकाता ।

प्रकाशकः—

श्रीजानकीनाथकाव्यतीर्थः ।

संस्कृतसाहित्यपरिषद्भवनम्, श्यामबाजार ब्रीज रोड, कलिकाता ।

प्रतिखण्डमूल्यं ।० चतुराणकम् । ] [ वार्षिकमूल्यं २, रूप्यकद्वयम् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

## কেশরঞ্জন তৈল।

( সর্ব্বপ্রকার শিরোরোগের মহৌষধ। )

ইহা ব্যবহারে কেশহীনতা ( টাক ), মস্তকঘূর্ণন, মস্তিষ্কের দৌর্ব্বল্য, সর্ব্বদা মন হু হু করা, কর্ত্তব্য কার্য্যে অনিচ্ছা, অনুচিত শুক্রব্যয় ও অধিক মাদব সেবন জন্য পীড়া, দর্শন ও শ্রবণশক্তির অল্পতা এবং অকালপক্কতা প্রভৃতি যাবতীয় শিরোরোগ আরোগ্য হইয়া মস্তিস্ক শীতল ও চক্ষুর জ্যোতিঃ বৃদ্ধি হয়। সুগন্ধ মানসিক পীড়ায় অত্যন্ত উপকারী; এজন্য এই তৈলকে বিশেষ রূপে সুগন্ধি করা হইয়াছে। যাঁহারা সৌন্দর্য্য ও স্বাস্থ্য উভয়ই রক্ষা করিতে চাহেন, তাঁহারা এই তৈল ব্যবহারে বিশেষ ফললাভ করিতে পারিবেন।




এক শিশির মূল্য ১৲ এক টাকা ডাঃ মাঃ ও প্যাকিং ।৵০ পাঁচ আনা একত্র তিন শিশি লইলে ২॥০ আড়াই টাকা, মাশুলাদি ॥৵০ আনা; বড় এক শিশির মূল্য ৩৲ তিন টাকা। ইহাতে ছোট শিশির চারিগুণ তৈল থাকে।

## সঞ্জীবন রসায়ন।

ইহা বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ। স্নায়বীয় দুর্ব্বলতার জন্য যাঁহাদের উদ্যম-উৎসাহশক্তি-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অজীর্ণ অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে **সঞ্জীবন রসায়ন** অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহাদ্বারা বমন, বমনেচ্ছা, উদ্‌গার, হিক্কা, আধ্মান ( পেটফাঁপা ) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রব সমূহ অচিরে নিবারিত হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য ও স্নায়বিক দুর্ব্বলতা নিবারণ জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ এক টাকা মাত্র। মাশুলাদি ।৵

১৪শ সংস্করণ **সচিত্র কবিরাজি-শিক্ষা।** পরিবর্দ্ধিত

### শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত। অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও ইহা একখানি নিত্য-ব্যবহার্য্য গ্রন্থ। নাড়ী-পরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি-প্রস্তুত-বিধি, এবং বিষ চিকিৎসা, দীর্ঘজীবন-লাভের উপায় স্বর স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা ও দ্বিতীয়খণ্ডস্বরূপ মহর্ষির গৌরব—সুশ্রুত-সংহিতা অষ্টম সংস্করণে সন্নিবেশিত হইয়াছে। এত অল্পকাল মধ্যে নয়টি সংস্করণে ভারতের সর্ব্বত্রই কবিরাজি-শিক্ষার উপাদেয়তা প্রতি হইয়াছে। মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ৸০ বার আনা।

গবর্ণমেণ্ট মেডিকেল ডিপ্লোমাপ্রাপ্ত **কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং**

১৮।১নং লোয়ার চিৎপুর রোড, কলিকাতা।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

१८४२ शकीया।

# संस्कृतसाहित्यपरिषत्

## पत्रिका।

तृतीयवर्षस्य

ज्यैष्ठात् चैत्रपर्य्यन्ता।

सम्पादकः—

श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थः।

सहकारिसम्पादकः—

श्रीकालीपदतर्काचार्य्यः।

वार्षिकमूल्यम् २) ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# वर्षसूची ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत् ।

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालीकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४२ शकीय—चैत्रे ३य वर्षस्य १२श संख्या ।

## उपनिषत्कथा ।

( लेखकः—सम्पादकः )

( प्रश्नोपनिषत् )

अथैवं भगवतः पिप्पलादस्य गुरोः श्रवणमनोहारिणीं सत्त्वशुद्धि-विधायिनीं ब्रह्मात्मभावप्रसाधिनीं परां तां वागमृतधारां तदेकाग्रेण चेतसा नितरामापीय निवृत्तत्वपि सत्यसाधने कात्यायने विरतवचसि सति, प्रबलजिज्ञासासादितत्वरः महाभागो भार्गवः पुनः पिप्पलाद-मादरात् पप्रच्छ—

"भगवन्, कत्येव देवाः प्रजां विधारयन्ते, कतरे एतत् प्रकाशयन्ते, कः पुनरेषां वरिष्ठः ? इति ।"

भगवन्, प्रजायमाने ह्येतस्मिन् जीवदेहे बहवो देवास्तदधिष्ठातारो वर्त्तन्ते, इत्यमवगम्यते भगवत्पादेभ्यः श्रुत्यादिभ्यश्च । तदिदमिदानी-मवगन्तुमिच्छामि यत्, तेषु देवेषु कियत्संख्यका देवा इमां प्रजां शरीरलक्षणां विधारयन्ते विशेषेण कर्म्मक्षमां कुर्व्वते द्विधा भिद्य-मानेषु ज्ञानेन्द्रियाधिष्ठातृषु कर्म्मेन्द्रियाधिष्ठातृषु च देवेषु कतरे किंस्वरूपाः किमभिधानाश्च देवाः स्वमहिमप्रकटनं यथा स्यात्, तथा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकाशयन्ते ? यथोक्तानां देवानां मध्येर वरिष्ठः प्रधानश्च कः ? इत्येवं प्रश्नानां त्रयमभिधाय तृष्णादीर्घेण नयनयुगलेन तमापिबन्निव, भार्गवो विरतवचनो बभूव।

अथ अप्रतिहतप्रज्ञः प्रज्ञातविश्ववृत्तान्तो योगचक्षुर्महर्षिः पिप्पलादः भार्गवस्य प्रश्नान् सर्व्वात्मना समभिनन्द्य पुरन्दर-पुरोधा इव हर्षगद्गदया गिरा प्रवक्तुमुपचक्रमे। वत्स, कथयामि ते तत्त्वम् गृहीतावधानेन निशम्यताम्।

"आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च। ते प्रकाश्याभिवदन्ति—वयमेतद्वाणमवष्टभ्य विधारयामः॥"

अयमाशयः—कार्य्यकरणसंघातमये हि अस्मिन् शरीरे त्रिविधा देवाः परिलक्ष्यन्ते। तत्र केचिद् आरम्भकाः, केचिद् विधारकाः, केचिच्च प्रकाशकाः।

तत्र च आकाशः, वायुः,अग्निः, आपः, पृथिवी चेति पञ्चभूतमया देवा आरम्भकाः, वाक्, मनः, चक्षुः, श्रोत्रं चेति कर्म्मेन्द्रिय-ज्ञानेन्द्रियाणि शरीरं धारयन्ति प्रकाशयन्ति च—इत्यतस्तदभिमानिनो देवा धारकाः प्रकाशकाश्च। "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इति ब्रह्मसूत्रत आकाशादिपदेभ्योऽपि तदभिमानिनो देवा एव लक्ष्यन्ते ; न तु भूतान्येव।

तत्र शरीरारम्भकाणाम् आकाशादिदेवानां साधारण्येन नास्ति विवादास्पदं किमपि, कार्य्यकरणदेवानां प्रायशो नियतविषयतया सम्भवतीह विवादनिदानम्। ते हि शरीरेऽस्मिन् स्वं स्वं माहात्म्यं प्रकाश्यात्मनः श्रेष्ठतां प्रत्याययितुं स्पर्द्धमाना विवदन्ते स्म—वयम् एतत् वाणं शरीरं अवष्टभ्य—प्रासादमिव स्तम्भादयो, विशेषेण धारयामः अहमेवैकः शरीरमिदमवष्टभ्य स्पष्टं धारयामीत्येकैकस्याभिप्रायः। तत एव चान्योन्यं विवादः प्रादुरभूत्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथैवमविवेकपरवशतया स्पर्द्धया विवदमानेषु करणेषु तत्त्वनो-निर्णयमनधिगम्य व्यामोहमापद्यमानेषु सत्सु—

"तां ह वरिष्ठः प्राण उवाच—मा मोहमापद्यथ ; अहमेवैतत् पञ्चधात्मानं प्रविभज्य एतद्बाणमवष्टभ्य विधारयामीति।"

अयमाशयः—आत्मोपकरणीभूता वागादयः सर्व्वं एव 'प्राण'शब्दे-नाभिधीयन्ते। तेषु च प्राणनादिवृत्तिभेदवान् गरीयान् प्राणेषु प्राणः। स च वरिष्ठः प्राणः प्राणान्तराणां मोहपरतन्त्रतया अहं श्रेयसे प्रवर्त्त-मानं कलहकोलाहलमालच्य तेषां मोहमपाचिकीर्षुः तान् समाभाष्य प्राह—भो भोः प्राणाः अहमेकस्मिन् शरीरे श्रेयान्—मयैवैतत् शरीरं विधार्य्यते प्रकाश्यते चेतीयं मोहं मा आपद्यथ, मोहफलमेषोऽभि-मानो युष्माकम्, यतो न यूयमस्य धारकाः प्रकाशका वा स्वतः। तत्त्व-तस्तु—अहमेव मुख्यः प्राणः आत्मानं प्राणापानादिभेदेन पञ्चधा प्रविभज्य एतद् वाणं—गतिशीलम्—अचिरस्थायि शरीरम् अवष्टभ्य —उत्तम्भनेन शैथिल्यमपाकुर्व्वन् विस्पष्टं धारयामि, न पुनर्यूयमन्यो वा कश्चिदिति।

अथैवमभिदधत्यपि वरिष्ठे प्राणे, नितरां मलीमसे भस्मस्तूपे चन्द्र-पादा इव, मोहजालकलितेषु तेषां चेतःस्थः तदीयः सदुपदेशः प्रकाशं नाससाद। ततश्च—

"ते अश्रद्दधाना बभूवुः। सोऽभिमानादूर्द्ध्वमुत्क्रामत इव।"

अहंश्रेयसे विवदनशीलास्ते प्राणा यथार्थेऽपि मुख्यप्राणस्य वचसि अश्रद्दधाना बभूवुः तद्वाक्यं परमार्थतया न जगृहुः। वागादीनां करण-देवानामेवमसमीच्यकारितामालच्य मुख्यप्राणस्य तान् प्रति महान-भिमानः प्रादुर्बभूव। एवमुपचीयमानमभिमानभरमपसारयितुं तेषां व्यामोहैकभुवमखर्व्वगर्व्वपर्व्वतं च पराकुर्व्वन् स खलु मुख्यः प्राणः अभिमानमालम्ब्य करणाधिष्ठितात् देहादस्मात् ऊर्द्ध्वम् उत्क्रमते इव—देहमपहाय बहिर्गन्तुमिव व्यचेष्टत।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथैवं सकलकरणाधाननिदाने प्रधाने प्राणे, निर्जिगमिषति—

"* * * अथेतरे सर्व्वे एवोत्क्रामन्ते, तस्मिंश्च प्रतिष्ठमाने सर्व्वे एव प्रतिष्ठन्ते। तद्यथा—मक्षिका मधुकरराजानम् उत्क्रामन्तं सर्व्वा एवोत्क्रामन्ते, अस्मिंश्च प्रतिष्ठमाने सर्व्वा एव प्रतिष्ठन्ते, एवं वाङ्मनश्चक्षुः श्रोत्रं च"।

इतरे चक्षुरादयः प्राणाः सर्व्वे एव समं मुख्यप्राणेन उत्क्रामन्ते —उच्चक्रमुः, तथा तस्मिन् प्राणे प्रतिष्ठमाने देहे प्रतिष्ठां गते तूष्णीमवस्थिते च सति, इतरे सर्व्वे एव प्राणाः प्रतिष्ठन्ते।

दृष्टान्तेन हि परोक्षः पदार्थः दृढ़ं प्रत्ययमादधातीति मन्यमाना श्रुतिः स्वयमेवास्मिन्नर्थे मधुमक्षिकादृष्टान्तमुपक्षिप्याह—यथा हि मधुमक्षिकाः स्वगोष्ठीगरिष्ठं मधुकरराजं सर्व्वतोऽनुवर्त्तन्ते, यदा खलु स मधुकरराजः कुतश्चित् क्वचित् समुत्पतति, तदा किल ता अपि तमनुसृत्य समुत्पतन्ति; यदा पुनः स क्वचित् प्रतितिष्ठति, इतरा अपि तमनु प्रतिष्ठां भजन्ते, तथैव तस्मिन् वरिष्ठे प्राणे उत्क्रामति सति इतरे चक्षुरादयः प्राणा अपि स्थातुमपारयन्त उत्क्रमणोद्यता बभूवुः। प्रतिष्ठमाने च तस्मिन् वाक्, मनः, चक्षुः, श्रोत्रं च प्रतिष्ठामलभन्त। एतदसामान्यं प्राणवृत्तमधिगम्य वाङ्मनः प्रभृतयः सर्व्वे प्राणाः प्राणश्रैष्ठ्यमवधार्य नितरां अप्रीयन्त; प्रीताश्च मुख्यप्राणस्य श्रैष्ठतामुद्घोषयितुं प्रवृत्ताः स्तुतिवादैस्तमभ्यपूजयन्—

"एषोऽग्निस्तपत्येष सूर्य्य एष पर्ज्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत्॥"

एषः अस्मद्वरीयान् प्राणः अग्निः सन् आत्मानमग्निरूपेण प्रकटयन् जगत् तपति, तथा सूर्य्यः सन् जगदवभासयति। अपि च एष एव मघवान् सन् परितो वारि वर्षति; एष एव आवह-प्रवहादिसप्तविधवायुभेदः सन् मेघान् ज्योतिश्चक्रादीनि च वहति;

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एष पृथिवी भूत्वा भूतानि धारयति, रयिः चन्द्रः सन् सर्व्वं पुष्णाति। किं बहुना—सत्—कारणम्, असत्—कार्य्यं, अमृत—मरणरहितं च यत् किञ्चिदस्ति, तत् सर्व्वम् एष प्राण एव, प्राणव्यतिरिक्तं नास्ति मनागपि।

अपिच—

"अरा इव रथनाभौ प्राणे सर्व्वं प्रतिष्ठितम्।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च ॥"

अराः चक्रशलाकाः यथा रथस्य नाभौ चक्ररन्ध्रे प्रतिष्ठिता भवन्ति, तथा सर्व्वं जगदपि अस्मिन् प्राणे प्रतिष्ठितम् अस्ति। न केवलमेतदेव, अपि तु ऋग्यजुःसामाख्याः सर्व्वे मन्त्राः, मन्त्रसाध्यो यज्ञः सर्व्वपालकं क्षत्रम्, यज्ञनिष्पादकं तत्त्वोपदेशकं ब्रह्म ब्राह्मणश्च प्राणे प्रतिष्ठितमस्ति। सुतरां महाभागधेयतया महाप्रभावतया च सर्व्वतो गरीयानेष प्राणः कुतः परां स्तुतिं नोपलभेत।

एवमादिभिरनेकविधैर्वाक्प्रपञ्चैः प्राणस्य महामहिमशालिताभाख्यातुमुद्यताः प्राणा एकैकशस्तद्गुणगणान् गणयितुमपारयन्तः संक्षेपतस्तावदाहुः—

"प्राणस्येदं वशे सर्व्वं त्रिदिवे यत् प्रतिष्ठितम्।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥

एतावन्महिमाशी मुख्यः प्राणः; यत् अस्मिन् लोकत्रये चरमचरं वा यत् किमपि विद्यते, तत् सर्व्वमेव अस्य शासनमनुवर्त्तते प्रभोरिव भृत्यः। प्रभुप्रसादो हि सर्व्वथार्थनीयो भृत्यानां तदनुजीविनाम्, इत्यतस्तदेवान्ततः प्रार्थयते—

भो भगवन् प्राण, त्वमसि मुख्यतमो गरीयानस्मासु; यतस्त्वदधीना स्थितिरस्माकम्। वयन्तु अबोधोपहतमतयस्तावकीनं महिमानमनाकलय्य व्यामोहमापन्नास्त्वामनादृत्य स्वमहिमख्यापनपरा अभूम। तदिदानीं क्षमस्वास्मदपराधम्; प्रसीद परमार्थतः; मातेव

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अस्मान् रक्ष ; तथा कर्मसाधनशक्तिरूपाः श्रियः तत्स्वरूपपरिज्ञान-योग्यां प्रज्ञां च नः विधेहि ; यथा पुनरेवं मोहं नापद्येमहि। इत्येवमभिधाय सर्वे प्राणाः स्वस्वगोलकस्थानेषु प्राविशन् ।

भगवन् पिप्पलादश्च तामिमामाख्यायिकामुपक्षिप्य प्राणैकदैवत-भावमुपदिश्य विरराम। प्रष्टा भार्गवो वैदर्भिश्च ज्ञातज्ञेयतया कृत-कृत्यम्मन्यो मौनमालम्बत ।

अयमेव हि प्राणसंवाद उपनिषदन्तरेऽपि बृहदारण्यकादौ महता वाक्प्रपञ्चेन रहस्यगर्भेण तत्त्वसम्पदा च समुपस्कृतः। तत्र तत्र चेत्थमेव इन्द्रियाणामहंश्रेयसे महान् कलहः, तदपनिनीषया तत्त्व-निर्दिधारयिषया च प्रजापतिसमीपसमुपसर्पणम्, तदुपदेशवशेन च प्राणश्रैष्ठ्यावधारणम्, स्वमहत्तमाय च तस्मै बलिसमाहरणम् इत्येवमादयो बहवोऽर्थाः सन्निबद्धाः ।

अनन्तरवचनीयेन कथोद्घातेनालम् । सम्प्रति कौतुकावहं किमपि निवेदयामि ।

योऽयं प्राणसंवाद इह संक्षिपतः क्वचिद्वा विस्तरतश्च उक्तः । अय-मेव हि पुरा कदाचित् भारतवर्षमागच्छद्भिर्यवनैः प्रतिगमनवेलायां ग्रन्थैः सार्द्धं पाश्चात्यप्रदेशमुपनीतः प्रचारितश्च बभूव ग्रन्थेषु। अथ स सुचिरप्रवासपरवशतया, पाश्चात्यप्रदेशपरिवासाद्वा, जड़ोपचारपर-मलिनमानससम्पर्काद्वा—पाश्चात्यप्रदेशात् प्रत्यागता इदानीन्तना युवान इव विकृतवेशभाषावयवतया रूपान्तरमिवापन्नः 'कथामाला' प्रमुखेषु प्रबन्धविशेषेषु स्थितिमुपागतः वैदेशिक इव नास्मान् सम्भा-वयति। अस्माकं प्राणप्रियोऽयम् औपनिषदः प्राण एव उदम्बरीणां प्रसादमहिम्ना उदरत्वेन परिणमित इत्यहो अनात्म-परविविकितास्माकं परानुकारसारतराणामिति ।

———

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# दुर्गेशनन्दिनी

( लेखकः श्री...................... )

## चतुर्दशपरिच्छेदः ।

अस्मिन् अवसरे विमला समागत्य बहिर्देशात् द्वारशृङ्खलं चालितवती। सा द्वारपार्श्वात् अलक्ष्यभावेन सर्व्वम् अदर्शत्। द्वारशब्दमाकर्ण्य दिग्गजस्य मुखं शुष्कताम् आससाद।

आशमानी प्राह—"अहो अत्याहितम्! विमला समेति, प्रच्छाद्यतां प्रच्छाद्यतामात्मा।" दिग्गजविप्रः सविलापमाह—"कुत्र आत्मा प्रच्छाद्यताम्?"

आशमानी प्राह—"अमुष्मिन् अन्धकारमये गृहकोणे काञ्चित् कृष्णस्थालीं शिरसि विन्यस्य उपविश, यथा अन्धकारे न प्रतीयेथाः।"

दिग्गजस्तदैव कर्त्तमुपासर्पत्, आशमान्याः बुद्धेः सुतीक्ष्णतया विस्मयमुपलेभे। दुर्भाग्यतया सत्वरं ब्राह्मणः कामपि सूपस्थालीमवताद्य शिरसि न्यवेशयत्, तत्र अर्द्धस्थालीपरिमितं पक्वं सूपमासीत्, दिग्गजेन यावदेव स्थालीं परावर्त्त्य शिरसि निधातुं प्रारब्धम्, तावदेव शिरसः सूपं शतधारं प्रावहत्। शिखया सूपस्य स्रोतः समवतीर्णम्। पर्व्वतात् भूतलगामिनदीसलिलमिव तरङ्गभङ्गीभिः स्कन्धात् वक्षसः पृष्ठात् बाहुभ्याञ्च सूपधारा विगलितुमारेभे। समुन्नता नासिका सूपप्रस्रवणजुष्टगिरिशृङ्गमिव शोभते स्म। अस्मिन्नवसरे विमला गृहं प्रविश्य दिग्गजशोभासन्तानसन्दर्शनव्यापृताभूत्। दिग्गजो विमलामवलोक्य विलापं प्रावर्त्तयत्। विमला दृष्ट्वा दयावती जाता, प्राह च—"मा रोदीः! यदि त्वामिममवशिष्टमन्नसङ्घातं भुञ्जीथाः, तदा न वयमेतत् सर्व्वं कस्यापि कथयेम" तदानीं ब्राह्मणः प्रसन्नो जातः, प्रफुल्लाननः पुनरपि भोजनार्थमुपाविशच्च।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभिलषति शरीरलग्नमपि सूपमुपादातुम्, किन्तु तन्न पारयति, अथवा साहसं नाधितिष्ठति। आशमानिकार्थं यद् भक्तं मर्द्दितं, तद् भुक्तवान्, विनष्टस्य सूपस्य कृते च बहु परितापवचः प्रयुक्तवान्। भोजनावसाने च आशमानी तं स्नपितवती।

स्थैर्य्यमुपलब्धवन्तं ब्राह्मणं विमला प्राह—"रसिक, काचित् सुमहती वार्त्ता वर्त्तते।"

रसिकः प्राह—"कीदृशी" ?

विमला—अपि त्वम् आवयोः स्निह्यसि।

दिग्गजः न स्निह्यामि ?

विमला--द्वयोरेव ?

दिग्गजः- द्वयोरेव।

विमला—यत् कथयामि, तत् शक्नुयसि ?

दिग्गजः—न शक्नुयामि ?

विमला—इदानीमेव ?

दिग्गजः—इदानीमेव।

विमला—अस्मिन् दण्ड एव ?

दिग्गजः—अस्मिन् दण्ड एव।

विमला—अपि जानीषि कथमावामागते ?

दिग्गजः— न।

आशमानी प्राह—"आवाभ्यां त्वया सह पलायितव्यम्।"

ब्राह्मणो विस्मितस्तब्धदृष्टिं पातयन्नास्त।

विमला कष्टेन उच्चहास्यं निरुध्य, प्राह च—"अथ कथं न वाचं विसृजसि ?"

"आं—आं—आं—त—त—तदा—तदा—वचनं सुनिष्पन्नं नाभवत्।"

आशमानी प्राह—"तत् किं न शक्नुयसि ?"

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



"आं—आं—आं—तदा—तदा—भगवतः स्वामिनो विनिवेद्य प्रत्यावर्त्ते ।"

विमला प्राह—"किं वा पुनः स्वामिनः कथयितव्यम् ? किमिदं ते मात्स्याद्र्दमुपनतं, यत् स्वामिपादानां समीपे व्यवस्थासंग्रहाय गन्तासि ।"

दिग्गजः—नहि, नहि, तत्—न यास्यामि । तत्—कदा गन्तव्यम् ?

विमला—कदा ? इदानीमेव प्रतिष्ठस्व । भूषणादिकं संगृह्य बहिरभवमिति नो दृश्यते ?

दिग्गजः—इदानीमेव ?

विमला—नेदानीम् ? तत् किमन्यत् ? अन्यथा कथय आवामन्यं जनं अन्विष्याव ।

गजपतिरतः परं न शशाक स्थैर्य्यं गन्तुम् । कथयामास,—"चलतम्, एष गच्छामि ।"

विमला प्राह—"उत्तरीयं गृह्यताम् ।"

दिग्गजो नामावलीमङ्के दधार, अग्रे विमलया पश्चाच्च ब्राह्मणेन प्रस्थाने प्रक्रमितव्ये दिग्गजः प्राह—"सुन्दरि !"

विमला—किमिव ?

दिग्गजः—पुनः कदा आगन्तव्यम् ?

विमला—किं पुनरागन्तव्यमिति ? चिराय प्रतिष्ठामहे ।

हास्येन परिपूर्णमास्यं दिग्गजस्य । अब्रवीच्च—"अथ तैजस-पात्रादिकान्यत्र वर्त्तन्ते ।"

विमला— सर्व्वाण्यमूनि परिक्रीय तुभ्यमुपहरिष्यावः ।

ब्राह्मणः कियन्तं क्षोभं प्रापत्, किंवा करोतु, स्त्रियौ मंस्येते नावयोः स्निह्यतीति, अभावपक्षे कथयामास—"पुस्तकस्तदाधारश्च ?"

विमला प्राह—"शीघ्रं गृह्येताम् ।"



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्यादिग्गजस्य केवलं पुस्तकद्वयं,एकं व्याकरणं,परा च स्मृति
व्याकरणं करेणादाय प्राह—"कोऽर्थस्तावदनेन ? इदन्तु म
कण्ठगतमेवास्ति।" एतदुक्त्वा केवलं स्मृतिग्रन्थमेव आधारमधरगत
मकरोत्, दुर्गां श्रीहरिरितुच्चार्य्य च विमलया आशमान्या च साव
प्रतस्थे। आशमानी—"युवां अग्रे गच्छतम्, अहं पश्चादागच्छामि।
इत्युक्त्वा गृहमगच्छत्। विमला गजपतिश्च सह प्रातिष्ठेताम्। उभ
तमसि अदृश्यौ दुर्गद्वाराद् बहिरभूताम्। कियद्दूरं गत्वा दिग्गज
प्राह—"कुतः ? आशमानी नागता ?" विमला प्राह—"मन्
सा नागन्तुं समर्थाभूत्। किं पुनस्तया ?"

रसिकराजो जोषमासीत्, क्षणात् परं सुदीर्घं निश्वस्य प्राह-
"तैजसपात्रादिकम् ?"

चतुर्द्दशपरिच्छेदः समाप्तः

---

## पञ्चदशपरिच्छेदः।

## दिग्गजसाहसम्।

विमला द्रुतपादविक्षेपेण सत्वरं मान्दारणं पश्चादकरोत्, घो
न्धकारा रजनी, नक्षत्रालोकेन सावधानं व्यचलत्। प्रान्तरपथमासा
विमला किञ्चिदिव भीताभवत्। सहचरो निःशब्दं अनुसरति, नां
वचनव्ययोऽपि! ईदृशे काले मनुष्यकण्ठस्वरः श्रुतः साहसमुत्पादय
श्रोतुमाकाङ्क्षापि जायते। अतएव विमला गजपतिमपृच्छत्—"रसि
मणि, किं चिन्त्यते ?" रसिकमणिरवोचत—"अथ तैजसपात्रादोनि
विमला प्रतिवचनमकुर्व्वाणा मुखे वसनांशं विन्यस्य हसितुमारे
क्षणात् परं विमला पुनर्वचनं प्रायुङ्क्त—"दिग्गज, अपि विभे
त्वं भूतयोनेः ?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिग्गजः—राम राम राम! रामनाम समुच्चार्य्य इत्युक्त्वा विमलायाः पश्चात् द्विहस्तान्तरे प्रससार।

एकं लभते, अन्यञ्च याचते। विमला प्राह—"अस्मिन् मार्गे सुमहान् भूतोपद्रवः।" दिग्गजः समुपसृत्य विमलाया वसनान्तमव लम्बितवान् विमला वक्तुमारेभे—"वयमन्येद्युः शैलेश्वरं सम्पूज्य प्रत्यावर्त्तमानाः पथि वटपादपतले काञ्चित् विकटसंस्थानां मूर्त्तिम- पश्याम। वसनान्तनियन्त्रणया विमला ब्राह्मणं सुतरां वेपथुमन्त- मनुमातुमशकत्। इतोऽधिकतरे प्रक्रमिते ब्राह्मणस्य गतिशक्तिरपि निरुध्येत इत्यपि विज्ञाय विरता प्राह—"रसिकराज, अपि शक्नोषि गातुम्? कुत्र वा रसिकजनः सङ्गीतानभिज्ञः?"

दिग्गजः प्राह—"अथ किम्।"

विमला प्राह—"अथ गीयतामेकं सङ्गीतं ननु।"

दिग्गजः प्राक्रमत। "एम्—हुम्—उम्—हुम्—सखि रे—

नीपशाखागनं श्याममपश्यं कीदृशी चणे?" पथिपार्श्वे काचित् गौः शयाना रोमन्थनपरासीत्; अलौकिकं शब्दं समाकर्ण्य सा सरभसं पलायाञ्चक्रे। रसिकस्य सङ्गीतन्तु प्रवृत्तमेवासीत्। "दग्धं तदा ललाटं मे कुले सञ्चारिता मसी। शीर्षे चूड़ा, करे वंशी, सहासो वचनक्रमः। वत्ति मातृष्वसर्गौपि निचिपेथं घटीमहम्।" दिग्गजस्य गीतं नातःपरं पदमलभत। सहसा तस्य श्रवणेन्द्रियमेकान्ततो मुग्धम- भवत्। अप्सरोहस्तस्थितवीणाशब्दवत् सुमधुरः सुधामयो मानसो- न्मादसम्पादकः सङ्गीतध्वनिस्तस्य श्रवणविवरमाससाद। विमला स्वेन पर्य्याप्तस्वरेण सङ्गीतमारेभे। निस्तब्धे प्रान्तरे नैशम् आकाशमभि- व्याप्य स सप्तस्वरसमन्वितः शब्दः समुत्थातुम् प्राक्रमत। शीतलं नैदाघपवनमारुह्य ध्वनिः प्रातिष्ठत।

दिग्गजो निश्वासरहितः श्रवणव्यापृतोऽभूत्, यदा विमला समाप्तिमकरोत्, तदा गजपतिराह—"पुनरपि"।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विमला—किं पुनरपि ?

दिग्गजः—पुनरपि किञ्चित् गीयताम्।

विमला—किं गीयताम् ?

दिग्गजः—एकं वङ्गभाषासङ्गीतं गीयताम्।

"गीयते" इति कथयित्वा विमला पुनः सङ्गीतमारभत।

सङ्गीतं गायन्ती विमला विज्ञातुमशक्नत्, यथा तस्या वसनान्तः रभसेन समाकृष्यते, परावृत्य व्यलोकत गजपतिः तस्याः पदोपरि समुपनतः सुतराम् यथाशक्ति तदीयवसनान्तमवलम्बितवान्, विमला सविस्मयमाह—"किमुपनतम् ? किमु पुनर्भूतयोनिः ?"

ब्राह्मणस्य वचनं न प्रसरति, केवलं अङ्गुलिसङ्केतेन समदर्शयदसौ इति। विमला स्थिरा सती तां दिशम् अभिवीक्षितुमारेभे। निरन्तरप्रबलनिश्वासशब्दस्तस्याः कर्णकुहरमाविशत्, सङ्केतिताया दिशि पथिपार्श्वे किञ्चित् वस्तु दृष्टञ्च। साहसमाश्राय समुपसृत्य विमला कञ्चन सुन्दरकायं खलङ्गृतञ्च तुरङ्गमं मृत्युयन्त्रणायां पतितं निश्वसन्तं व्यलोकत। विमला पन्थानमतिक्रामन्ती आसीत्। खलङ्गृतं सैनिकाश्वं पथि मुमूर्षुमिव परिलोक्य सा चिन्तामग्नाभूत्। [illegible] तूष्णीमासीत्। प्रायेण क्रोशार्द्धे अतिक्रान्ते पुनर्गजपतिस्तस्या वसनान्तमाचकर्ष।

विमला प्राह—"किमिति ?"

गजपतिरेकं द्रव्यमादाय प्रदर्शितवान्। विमला दृष्ट्वा प्रोक्तवती—"इदं सैनिकस्य शिरस्त्राणम्।" विमला पुनरपि चिन्तामग्नाभूत् स्वगतञ्च अवोचत—"यस्यैव तुरङ्गः, तस्यैव शिरस्त्राणम्, न हि,—इदन्तु पदातिकस्य शिरस्त्राणम्। कियत्क्षणादूर्द्ध्वं चन्द्रः समुदियाय विमला सुतरां विमना बभूव। चिरादनन्तरं गजपतिःससाहसं पप्रच्छ—"सुन्दरि, कथं पुनर्वचनं न वदसि ?"

विमला प्राह—"पथि किमपि चिह्नं पश्यसि ?"

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गजपतिः सविशेषं मनो निवेश्य पन्थानं दृष्ट्वा प्राह—"पश्यामि बहूनां तुरङ्गाणां चरणचिह्नम् ।"

विमला—बुद्धिमन्, अपि किञ्चिदवधारितवानसि ?

दिग्गजः— न ।

विमला—तत्र मृतस्तुरङ्गः, अन्यत्र सैनिकस्य शिरस्त्राणम्, अत्र च एतावतां तुरङ्गाणां चरणचिह्नम्, एतावद्भिरपि किञ्चिन्नावधारयितुं समर्थोऽसि, कस्य वा कथयामि ।

दिग्गजः—किमिव ?

विमला—अचिरमेव अनेन पथा बहवः सैनिकाः प्रस्थिताः ।

गजपतिः सभयमाह—"तत् इतो मन्दतरं परिक्रम्यताम्, यावत्ते सुतरामग्रेसरा भवन्तु ।

विमला सहासमवोचत्—मूर्ख, कथं ते अग्रेसरा भवेयुः, कस्यां दिशि तुरङ्गाणां खुरमुखमिति नोपलक्ष्यते, इमे सैनिका दुर्गमान्दारणं (गड़मान्दारण) प्रति प्रस्थिताः ।" एतदुक्त्वा विमला विमनास्तस्थौ ।

अचिरेण शैलेश्वरमन्दिरस्य धवलां शोभां समीपवर्त्तिनीं दृष्टवती । विमला व्यचिन्तयत्,—"अलं राजपुत्रेण सह ब्राह्मणस्य साक्षात्कारेण, परं तेनानिष्टमेव सम्भवेत् । अतः कथं विसर्जनं कर्त्तव्यमिति । किन्तु गजपतिः स्वयमेव तत्सूचनामकरोत् ।

ब्राह्मणः पुनरपि विमलायाः पृष्ठसमीपमुपेत्य वसनान्तमवलम्बितवान् । विमला पृष्टवती—"किं पुनरपि ?"

ब्राह्मणः अव्यक्तस्वरमाह,—"स कियति दूरे ?

विमला—कः कियति दूरे ?

दिग्गजः—स न्यग्रोधपादपः ।

विमला—को न्यग्रोधपादपः ?

दिग्गजः—तस्मिन् दिने यत्र भवत्यौ दृष्टवत्यौ ।

विमला—किं दृष्टवत्यौ ?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिग्गजः—रात्रौ न नाम समुच्चार्य्यम्।

विमला विज्ञाय शुभमुपायं लब्धवती। गम्भीरस्वरमवादीच्च—आः।

ब्राह्मणः सुतरां भीतः प्राह—"किन्नु"?

विमला अव्यक्तस्वरं शैलेश्वरसमीपवर्त्तिनं न्यग्रोधपादपं प्रति अङ्गुलिविन्यासेन प्राह—"स एवासौ न्यग्रोधपादपः।"

दिग्गजो नातःपरं चचाल, गतिशक्तिशून्यः अश्वत्थपत्रमिव कम्पितुमारेभे। विमला प्राह—"एहि" इति।

ब्राह्मणः कम्पमानः प्राह—"नाहं पुनर्गन्तुम् अर्हामि।"

विमला प्राह—"अहमपि भीतास्मि।"

ब्राह्मणः एतच्छ्रुत्वा चरणं परावर्त्त्य पलायनप्रयत्नमकरोत्।

विमला वृक्षं प्रति दृष्टिमारोप्य वृक्षमूले वर्त्तमानं किञ्चन धवलं वस्तु व्यलोकत। सा जानाति स्म, यद्वृक्षमूले शैलेश्वरस्य वृषभः शेते, किन्तु गजपतिमवोचत्—"गजपते, स्मर्य्यतामिष्टदेवस्य नाम, वृक्षमूले किं दृश्यते?"

"हा—हा तात!" इति वदन्नेकपद एव प्राद्रवत् दिग्गजः। दीर्घदीर्घतरेण पादक्षेपेण कलामात्रेणैव कालेन क्रोशार्द्धमतिचक्राम।

विमला गजपतेः प्रकृतिमजानात्, अत एव सुव्यक्तं विदितवती, यथा सः सर्व्वथा दुर्गद्वारपर्य्यन्तमुपलेभे इति। विमला तदानीं विगतचिन्ता मन्दिराभिमुखं प्रतस्थे।

विमला सर्व्वां दिशं विभाव्य समागतवती, केवलमिमामेव दिशम् अविभाव्य, अपि राजपुत्रो मन्दिरं प्राप्तः? एवं मनसि समुदितेन संशयेन विमला विषमं क्लेशमनुभूतवती मनसा विचारयामास, यथा राजपुत्रो निश्चयेन नावोचत, प्रत्यागमनवार्त्ताम् कामपि। केवलमवोचत, यत् अत्र मे साक्षात्कारो लब्धव्यः,यदि अत्र न साक्षात्कारो लभेरन्,तदा सः नैव सम्पन्न इति तत्तु अनागमनमपि सम्भवति। यदि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न प्राप्तः, तदा तु एतावान् क्लेशो विफलः, । विमला सविषाद-मात्मगतं वक्तुमारेभे" कथम् इदं वृत्तमादौ न चिन्तितम् ? कथं वा ब्राह्मणः प्रस्थापितः, कथमस्यां रजन्याम् एकाकिनी प्रतिनिवर्त्तेय ? शैलेश्वर, त्वदिच्छात्र प्रभवति ।"

न्यग्रोधपादपतलेन शैलेश्वरमन्दिरं प्राप्तव्यं । विमला वृक्षतलेन गच्छन्ती तत्र वृषभो नास्तीति समपश्यत् । वृक्षमूले दृष्टं धवलं वस्तु तत्र नास्ति, उत्थाय कुत्रचित् यदि वृषभः प्रास्थास्यत, तदा प्रान्तरमध्ये दृष्टोऽभविष्यत् ।

विमला वृक्षमूलं प्रति विशेषतो दृष्टिं विन्यस्य वृक्षस्य पश्चात् अवस्थितस्य कस्यचित् पुरुषस्य धवलपरिच्छदमंशमात्रेण व्यलोकत इव । विमला ततोऽपि भीतिं जगाम, सातिशयचञ्चलचरणा च मन्दिराभिमुखं प्रचचाल । सरभसञ्च कपाटं करेण ताड़यामास । कपाटो रुद्धः । अभ्यन्तरात् गम्भीरस्वरेण प्रश्नः समुच्चचार—"को नाम ।" शून्यमन्दिरात् गम्भीरस्वरेण प्रतिध्वनिरुदचरत् "को नाम ?"

विमला यथाशक्ति साहसमाविश्य प्राह—"पथिश्रान्तः स्त्रीजन" इति ।

कपाटः अपावृतः । अथ दृष्टं मन्दिरमध्ये प्रदीपो ज्वलति, सम्मुखे च कृपाणकोषहस्तः कश्चन दीर्घकायः पुरुषस्तिष्ठति, इति । विमला विलोक्य "कुमारजगत्सिंह" इति प्रत्यभिज्ञातवती ।

पञ्चदशपरिच्छेदः समाप्तः

(क्रमशः)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शूद्रकस्तत्काव्यञ्च ।

( पूर्व्वतोऽनुवृत्तम् । )

( लेखकः—श्रीगोपालचन्द्रकाव्यतीर्थः । )

ब्राह्मणसुलभनिखिलगुणसमलङ्कृतोऽपि केवलादर्शब्राह्मणरूपेणासौ परिकल्पितरूपकरचयित्रा । मन्ये, भूतपूर्व्वविभवाधीश्वरस्य तस्य पूर्व्वत एवासीदिव विलासलालसा महीयसी । रूपकेऽपि कथञ्चित् चत्रियगुणजड़ितस्यास्य व्यवहारः नृपतिजनसमान एव.न तु तेजस्विविप्रानुरूपः । तेनैव वसन्तसेनया सह तस्य प्रणयव्यापारकथनं असमीचीनं न जातम् ।

शारद-शशधर-करनिर्म्मले गुणवतस्तस्य विशाले शीले पार्व्वणशर्व्वरीश्वरे कलङ्क इव परिदृश्यते दोषः कश्चिद् वेश्यानुरक्तिरूपः । तेन च केनचिदभावुकेन विगर्हितो जायते रचयिता, ज्ञानवामनाः स्थूलनयना वयन्तु सूक्ष्मदर्शितां मनुष्यचरित्राभिज्ञताञ्च विशेषेणैव एतेन अवलोकयामः—तथाहि—दोषसद्भावत एव मानुषा मानुषाः, दोषाणामसद्भावे तु दैवतमेव प्रादुर्भवति तेषु । अतो दोषगुणविजड़ितानां सामाजिकानां चरित्रचित्रणे, दोषगुणभाक् कश्चन सामाजिक एव नायकपदमलङ्कुर्व्वन् स्वाभाविकतां परिरक्षितुं प्रभवति रूपकस्य । तथाच पाश्चात्यनाट्यजगतः एकातपत्राधिपतिना महामनीषिणा जगत्कीर्त्तितकीर्त्तिना सेक्सपीयरेण स्वसामाजिकनाटकेषु परिकल्पितानां नायकानां सामाजिकजनसुलभदोषगुणसमन्विततयैव प्रादुर्भूत-निरतिशयस्वाभाविकभावपरिपूर्णा रचना तस्य रोचते सर्व्वदेशीयानामिव चित्तेभ्यः सर्व्वदा ।

किञ्च दीनातिदीनां हीनामवस्थां परिज्ञायापि तस्य, वेश्याजनसुलभं धनलोभं परित्यजन्ती, या नाम गुणमुग्धा प्रणयिनीप्रणयभिक्षाम-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



करोत् विलुण्ठितशिरसा चरणे शरणे तस्य, प्रेमामृतधौतकलङ्क-कालिमा स्वार्थलेशपरिवर्ज्जिता सत्यं समुदारचेताः सा वसन्तसेना इतीत्थं विचारयता भावप्रवणान्तःकरणेन चारुदत्तेन नोपेक्षितो तस्याः पूतप्रणयः, एतेन तु महत्त्वमेव पचान्तरेण प्रकटीभूतं तदीयम्, एवं प्रणये कश्चित् दोषः सम्भवतीति आशङ्का न प्रादुर्भूता पूर्व्वतस्तन्मनसि, केवलमेकदा विचारालये कथञ्चिद्दोष-तदनुभवता सलज्जमभिहितं—"यौवनमत्रापराध्यति, न चारित्र"मिति ।

अतुलविभवाधीश्वरी निखिलकलाशास्त्रपारगामिनी वसन्तसेना-भिधाना वेश्याङ्गना परिपूर्णयौवनसौन्दर्य्यसमुद्भासितकाया नायिकास्य दुर्गतिदूरकारिका । नाम्ना वेश्यया तया कदापि वेश्यावृत्ति-रवलम्बिता किन्नवेति, मन्ये स्वेच्छयैव तत्र न किमपि वर्णितं ग्रन्थकृता । चारुदत्तप्रणयलाभात् पर धनहार्य्यशरीरा न सञ्जातासावित्येवमेव वक्तुमभिलषितन्तेन स्पष्टतः । दृश्यते राज-श्यालसकाशं गन्तुमनुरुद्धा मात्रा सक्रोधमेव भर्त्सितवती सन्देश-वाहिकां परिचारिकां मातरञ्च । यथा—"यदि मां जीवन्तीमिच्छसि, तदेवं न पुनरहं मात्रा आज्ञापयितव्ये"ति ।

वेश्याजनसुलभा निष्ठुरता, हीनता, असंयतलालसा च लेशतोऽपि रमणीकुलललामभूतायां तस्यां न परिलक्ष्यते, अपि तु उन्नतवंशसम्भवास्वपि सुदुर्लभा दयादाक्षिण्यादिगुणप्रभा समुद्भासयति सर्व्वदा अनिन्द्यचरितां ताम् । वेशवासकृतावासा अनुरागरससरसा समुदारमानसासौ कीदृशसौन्दर्य्यसमलङ्कृता सम्बभूवेति जिज्ञासा कौतूहलमुत्पादयति हृदये अनेकेषामेव । सा सौन्दर्य्यैकनिदर्शनभूता-सीत्, तत्र तु "वसन्तशोभेव" "रतोपस्थानयोग्या" इति विशेषण-युगलमेव प्रमाणम् ।

२

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कीदृशो नाम वर्णः अवर्णनीयगुणशालिन्या लावण्यसवर्द्धग्रदेहलतिकायास्तस्यास्तत्र किञ्चित् समालोच्यते—

भारतवर्षेऽस्मिन् ब्राह्मण-क्षत्रिय-वैश्य-विशुद्धशूद्रापेक्षया संमिश्रवर्णवतामेव प्राचुर्य्यं परिदृश्यते। तत्रापि अनार्य्यसाङ्कर्य्यं बहुलमतोऽनुमीयते गणिकाजातीयासु अनार्य्यसम्बन्ध एवावर्त्तत बाहुल्येन। शकारसेवकः स्थावरकः अत एव शूद्रवंशीयः 'अत्तिका' ( अर्थात् भगिनी ) शब्देन सम्बोधितवान् वसन्तसेनां। तस्या उच्चवंशीयत्वे नीचकुलोत्पन्नस्य स्थावरकस्य एवं सम्बोधनस्य एतावत् धार्ष्ट्य नैव भवितुमर्हति स्म। अपरतश्च "णीणासा" इति उपालम्भनोक्तिस्तां प्रतेव शकारस्य। यत्रैव 'निम्ननासा' तत्रैवानार्य्यसाङ्कर्य्यपरिदर्शनात् निम्ननासा च प्रायेण अनार्य्यनरनारीणां लक्षणं भवितुमर्हति। अपरतश्च गाढ़ान्धकारनिमग्नां वसन्तसेनामनवलोकयता शकारेणोदीरिता "मसीराशिषु प्रविष्टेव अञ्जनगुटिका" इति भारती च तस्याः कृष्णवर्णतामेव द्योतयते। कृष्णवर्णता हि अनार्य्यशोणितमिश्रणस्य सुस्पष्टलक्षणमतो मन्ये "सा श्यामाङ्गीति" परिकल्पना प्रायेणालीकतामवलम्बिष्यति।

वेश्यासंसर्गपरिपालितापि सा कुलवधूरिव शिष्टाचारपरायणा शिक्षिता च। तस्याः समुन्नतभावराजिर्जनयति स्वकीयामसाधारणतां सर्व्वजनानामेव मनसि। "गुणः खलु अनुरागस्य कारण"मिति तदीयं सुमार्ज्जितस्वभावमेव प्रकटयति।

विचारचतुरा सुचारुचरितं चारुदत्तं वित्तहीनमपि अवलोक्यैव, कलुषसागरे प्लवमानं स्वकीयनिन्दितजीवनमुत्तोलयितुं कृतप्रयत्ना विज्ञापयामास कौशलेन स्वनिर्लोभतां गणिकावृत्तिपराङ्मुखताञ्च। प्रतिकुसुमं मकरन्दबिन्दुसमाहरणकुशलिनी मधुकरी सत्यमनायासेनैव शक्नोति, सावहेलं रसालं विगतफलदलं परित्यक्तुं, किन्तु किमियमुदारचरिता निर्धनतया समर्थयते प्रणयास्पदं सुदूरं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परिज्ञातुम् ? चारुदत्तमाश्वत्तीकर्त्तुमेव न्यस्ता तत्सविधे अलङ्कार-मञ्जूषा । यतो धर्मपरायणोऽसौ न्यस्तविषयं परिपालयन् नैव गच्छति नयनपथान्तरालं प्रसत्तु मिति अवगतमेव तस्याः ।

"मन्दभागिनी अहं तवाभ्यन्तरस्य" इत्युक्ते रभिसारिकानुरूप-साहसमध्यतोऽपि कुलललनाजनसुलभा लज्जा परिस्फुटा सती साहसोद्योगपरिसञ्चितमन्तःकरणं तस्याः परिप्लावयति अदृष्टपूर्व्वं-माधुर्य्यरसेन । "कथं परमरहस्यं ! तत्र श्रोष्यामि" इति वचनमेवा-वगमयति. शिष्टाचारपरायणतां तदीयाम् । द्यूतकरादिकरात् संवाहकं परित्रायमाणा स्वालङ्कारप्रदानेन सत्यमेव प्रकटयामास निःस्वार्थदान-स्पृहामात्मनः ।

षष्ठाङ्के तु रोहसेनेन समं तदीयकथोपकथनं समाकर्णयतां मादृशां प्रसरति लालसा पवित्रदेवीशब्देन भूषयितुं ताम् । अहो ! कल्पनाकौशलं कविकुलललामभूतस्य तत्रभवतः शूद्रकस्य !

इतरसंस्कृतनाटकनायिकेव एषापि संस्कृतभाषाकुशलताम-लभत एव । किन्तु कलाशास्त्रशिक्षकं विटमथवा विदूषकमन्तरेण न कदापि कृतवती संलपनमसौ तया भाषया उच्चपात्रसमूहेन सह । तस्याः स्वगतोक्तिमपि चिराभ्यस्तप्राकृतभाषयैवेति प्रदर्शयन् कवयिता बोधयामास सामाजिकान् यत् स्त्रीणां समधिकविद्यावत्ताप्रकटन-दर्शनेन काचिदवज्ञा समुल्लसति चेतसि पुनरनेकेषामेव ।

अत्र दोषगुणविजड़ितोऽन्यतमपात्रभूतश्चतुर्व्वेदविदोऽप्रतिग्राह-कस्य कुमारः शर्व्विलको नाम युवकः । कलुषकर्म्मार्थं स्वं बहुशो निन्दितोऽपि तस्य प्रवृत्तिः केवलं सञ्चालयामास तं निरन्तरं स्वेच्छा-चारवर्त्मनि । नासौ सत्त्वगुणवित्तश्चारुदत्त इव धर्म्मधनो ब्राह्मणः । अपि तु रजोगुणरञ्जितः चतुरप्रधानः कर्म्मकुशलोऽसौ सर्व्वदैव चञ्चलः किमपि कर्म्म सम्पादयितुमनुदिनं प्रधावति यत्र तत्रैव । तेनैव मदनिकानिष्क्रयणविधौ निश्चयानुपदमेव, सन्धिच्छेदनपुरःसरं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चारुदत्तप्रासादादलङ्कारमञ्जूषामपहरता तेन समुपस्थितमचिरमेव सामोदं मदनिका-सन्निधौ। ततश्च मदनिकाश्रयं मदनिकां चिरस्पृहणीयामादाय सानुरागं प्रसरता बन्धोरार्य्यकस्य व्यसनवार्त्ताश्रवणानुपदमेव अनेकायासायत्तीकृतां तामन्यत्र संप्रेष्य धावितमनायासेन मित्रत्राणाय साहसिकशिरोहीरेण। उपायनिर्द्धारणेऽपि जर्व्वरमस्तिष्कं तस्य सर्व्वदैव दृश्यते निपुणमतिशयेन।

स्वाधीनस्वभावस्य वीररसप्रधानस्य श्लथसुनीतिबन्धस्य तस्याभिमतिः "साहसे श्रीः प्रतिवसति"। तथापि विप्रधनानां यज्ञार्थाहृतकाञ्चनानाञ्चापहरणं, धात्रीक्रोड़तलनिरुद्वेगनिषण्णानां कुसुमकोरकसुकुमाराणां शिशूनामुत्सादनं दूषणीयतया स्पष्टं सर्व्वदैव तेन परित्यक्तं कापुरुषस्वभावसुलभम्। प्रहाराभ्यस्तोऽपि "भीते सुप्ते न शर्व्विलकः प्रहरति"।

उपकथापरिकल्पितं राजश्यालकचरितं प्रायेण यथा परिलक्ष्यते, अत्रापि शकारचरितं तादृशमेव प्रकटीकृतममुना। असम्बन्धप्रलापिनः कापुरुषकुलनिदर्शनभूतस्य तस्य शार्द्दूलवत् क्रूरता, रासभवन्मूर्खता, छागपशुवत् कामुकता, शवरवन्नीचता च। कलेः प्रियानुचरस्य कलुषिकुलोत्तमस्य तस्य स्त्रीहत्यायामपि उल्लसति उल्लास एव हृतान्तःकरणे अनन्तयन्त्रणाप्रदायके। तदीयचरित्रस्य आद्यन्तसमालोचनेन आशङ्कैषा बलवती प्रादुर्भवति यत्, तादृङ्मूर्खताप्रकटनविधौ स्वेच्छाचारोऽभवत् कथञ्चिदिति।

शरीरिणी पवित्रतेव नायकस्य धर्म्मपत्नी आर्य्या धूता स्मारयति सर्व्वान् महामहिमपरिमण्डितेन अनुपमस्वभावेन, तपोवनवासिनीः सहधर्म्मचारिणीः महर्षिसमूहानाम्। समर्थयते सा वरं शरीरेण परित्यक्तमाकर्णयितुमार्य्यपुत्रम्; किन्तु शारदशशधरकौमुदीसुन्दरे निर्म्मलचारित्राम्बरे कलङ्कालिमपरिदर्शने अतुलधैर्य्यशक्तेरपि तस्याः शक्तिकणा च न परिष्फुरति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पुस्तकालय गुरुकुल कांगड़ी



चतुःसमुद्रसारभूतां रत्नावलीमेकां जननीस्नेहनिदर्शनभूतामनायासेन स्वामिगौरवपरिरक्षणाय वेश्याजनाय समर्पयन्ती सा स्वार्थपङ्ककलङ्किते संसारपटे यदचिन्तनीयचित्रमङ्कितवती मर्त्यलोकविरलन्तदिति सावधारणोक्तिरनेकेषाम्। अतएव युज्यते चारुदत्तस्य तादृशविपत्तिशतसमये समुदीरितं साह्लादं "अदरिद्रोऽस्मि सखे! अदरिद्रोऽस्मि—

"विभवानुगता भार्य्या सुखदुःखसुहृद्भवान्।
सत्यञ्च न परिभ्रष्टं यद्दरिद्रेषु दुर्लभ"मिति॥

वसन्तसेनया प्रत्यर्पितां रत्नावलीं समुपेक्ष्य यदभिहितं तया, तदवश्यपालनीयोपदेशरूपेण का नारी न गृह्णाति सादरमानन्दसन्दोहसमन्विता ; यथा—"अज्जउत्तेण तुम्हाणं पसादीकिदा, न जुत्तं मम एदं गेण्हिदुं ; अज्जउत्तो ज्जेव मम आहरणविशेषोत्ति जानादु भोदी।"

समग्ररूपके सा उदासीनेवाभासमाना ; वसन्तसेनया सह स्वामिनस्तादृशविसदृशप्रणयव्यापारं विज्ञाय च किमपि दृष्टिपातमकुर्व्वाणा समग्रेच्छामावर्ज्जितवती केवलस्वामिसुखसम्पादनाय। यदैव तया समलङ्कृता रङ्गस्थली, तदैव सहेलं परित्यक्तः स्वार्थो महान्। पतिकुशलन्यस्तचित्तायास्तस्या दृश्यते महीयसी शक्तिस्तन्निखिलोपेक्षानादरादिकं कर्त्तुं चरणविदलितम्। मन्ये परिणतप्रणयायां नवीनत्वचाञ्चल्य-परिशून्यायां तत्र तादृशविलासादीनामभावतः, उद्दामयौवनसुखाभिलाषुकस्य चारुदत्तस्य सञ्जातानुरक्तिः भूयो विलासादिपरिमण्डितायां वसन्तसेनायामिति।

बहुधा अनुपलक्षितोऽपि करि-कर-समबाहुः सिंहपीनोन्नतांसः। पृथुतरसमवक्षास्ताम्रलोलायताक्षः, आर्य्यकः शिष्टाचारबाहुल्येन स्वभावमाधुर्य्येण च असाधारणतयानुमीयते। असम्पूर्णचित्रमपि तच्चित्रं वस्तुतः प्राणस्पर्शकम्।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्व्वेष्वेव रूपकेषु दृश्यते वैशिष्ट्यविहीनमेकरूपमेव विदूषक-चरितम्, किन्तु अत्र वैशिष्ट्यमाभजते निरतिशयं विदूषक-चरितम्। चतुरो रसिकश्चासौ केवलमनुदिनं नैव मोदक रससरसि सन्तरणपरायणः। आदर्शसुहृदिव समभावेन गृहीतं स्वेच्छया तेन सुखदुःखं मित्रगतम्। "समीहितसिद्धैय प्रवृत्तेन ब्राह्मणोऽग्रे कर्त्तव्यः" इति धूताचितारोहणसमयोदीरिता भारती तस्य बोधयति चारुदत्तविपद्वार्त्ताश्रवणात् पूर्व्वमथवा विपत्पारा-वारात् समुत्तोलयितुन्नं पांशुमुष्टिमिव सहेलं जीवनमपि परित्यक्तुं समर्थोऽभूदसाविति।

हीनपात्रमपि संस्थानकः स्वकीयप्रकृतिप्रभावेण, आभासयति समग्रग्रन्थमनर्घ्यरत्नकलापो यथा, "पहवदि भट्टके शलीलाह, ण चालित्ताह" प्रभोरन्तिकमेवमुक्तिः कतिशिच्छितानामाननात् प्रादु-र्भवति? ततश्च भृशं ताड़ितस्य तस्य "पिट्टयतु भट्टके, मालेदु भट्टके, अकज्जं ण कलइश्शम्" इति वचनमनुन्नतजातीयस्यापि तस्य समुन्नतहृदयपरिचयमुपाहरत् विस्मयेन निश्चलयति चञ्चलमानसं सर्व्वेषामेव। चारुदत्तजीवनं परिरक्षितुकामस्यामुष्य उच्चहितल-प्रासादादुल्लम्फनमात्मत्यागस्य चरमोदाहरणमङ्कयति चित्तपटे न केषाम्?

अपरेषामपि वीरकचन्दनकादीनां चरितं निरतिशयस्वाभाविक-गुणगरिमोज्ज्वलं वैशिष्ट्यवन्मनोरमञ्च। "प्राप्ते तु राजकार्य्ये पितर-मप्यहं न जानामी"ति कर्त्तव्यनिष्ठायाश्चरमोदाहरणं प्रचारयति वीरकाननम्। "अज्ञाः, कुरुत धर्म्मसञ्चय" मिति संवाहकोक्तिः सहसा स्मृतिपथापगता सती मायाजालसंयतकरचरणान् मानवान्वय सम्भवान् सत्वरान् सम्पादयति धर्म्मसंग्रहविधौ।

नाटकीयपात्राणामनेकत्वेऽपि विशेषतश्चित्रितानि 'चारुदत्त-शकारशर्व्विलकवसन्तसेना-चरितानि। सुचित्रितस्यापि शाि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लकस्य अधिरूपकमल्पीयसी च प्रयोजनीयता ; किन्तु नाटकीय-वस्तुक्रमोन्नतिविषये सहायकः स विशेषतः। चारुदत्ते शर्व्विलके च प्रायेण नूतन-पुरातनयोः, शरीरात्मनोः, प्राच्यपाश्चात्यसभ्यतयो-र्दृश्यते निरन्तरं संग्रामो महान्। तथाहि उदासीन इव धर्म्म-वित्तश्चारुदत्तस्तु प्रचालयति जीवनं सनातनशास्त्रसमुद्दिष्टेन पुरातनवर्त्मना ; पाश्चात्यभावप्रधानः शर्व्विलकस्तु अवज्ञापदपातेन दूरं विद्रवयन् शास्त्राचारपद्धतिं सम्पादयामास ससाहसं विपुलं कृतिकलापम्। किन्तु पश्चाद्विजितयोर्द्वयोर्म्मध्ये, सत्त्वगुणाश्रयं चारुदत्तमेव समलङ्कुर्व्वतुग्रत्कृष्टया विजयमालिकया, आर्य्यधर्म्म-मर्म्मवित् प्रकरणप्रणेता नैपुण्येनादर्शयत् तारतम्यं सत्त्वरजसोः परिणामस्य।

सत्यं विहितोऽस्मिन्नवान्तरविषयाणां सन्निवेशो बाहुल्येन, तच्च केवलं स्वप्रतिज्ञातसमाजचित्रादिप्रदर्शनार्थमेव, चारुदत्तवसन्त-सेनाप्रणयविधौ तु न तस्य प्रयोजनं तादृशम्। यद्यपि सत्साहित्येऽपि गणिकाजनचरित्रमङ्कितम्, तथापि आदर्शभावभूयिष्ठतया सत्साहित्य-सम्मानवर्द्धनविधावेव तत् साहायकमनपरसामान्यं सञ्जातम्।

न केवलं वसन्तसेनाया अन्येषामपि नाटकीयपात्राणां चरित्रे सकौशलमेवमहो! वैशिष्ट्यं सन्निविष्टं, यदालङ्कारिकाणां सुदृढ़-नियमरज्जुसंयता अपि वयमुपलभामहे, मुक्तानन्दममन्दं प्रान्तरेऽ-स्मिन्महति मृच्छकटिकस्य। नैपुण्यघना घटना, अवर्णनीया वर्णना, अमितं कवित्वञ्च पदे पदे समुत्पादयति विस्मयं, विमोहयति च विशेषतो मानसदेशं पाठकानां दर्शकानाञ्च सर्व्वेषाम् ; माधुर्य्यमयी-भाषास्य कालिदासकृतिवदाभासमाना परिपूरयति सौन्दर्य्यपिपासा-मशेषाम्। प्राकृतभाषांशतो नानाविधभाषान्तरसन्निवेशविधावपि स्वाधीना अप्रतिहता गतिश्च परिलक्ष्यते सर्व्वतः असीमशक्तीश्वरस्य ग्रन्थकारस्य। किमन्यदतुग्रत्कृष्टस्थली कवलीकृतामुना संस्कृतनाट्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



साहित्यप्रासादस्येति प्रकाशं वक्तुकामा न भविष्याम इत्युक्तिदोष-विषया वयमिति सम्भावना मद्विधानाम्।

इदानीं मन्ये कवेः कवित्वविषयिणी काचित् समालोचना नैवा-समीचीनतामवलम्बिष्यते। तदीयवर्णना स्वाभाविकचित्रवत्प्रतिभासते नयनसकाशे श्रवणानुपदमेव—

"किं त्वं भयेन परिवर्त्तितसौकुमार्य्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती"

इत्यादि श्लोके भयचकितावेशवनिताचित्रं न कस्य चित्तमा-क्रामति श्रवणानुपदमेव रसिकजनस्य ?

"उत्तासिता गच्छसि अन्तिका मे,
संपुन्नपुच्छा विअ गिम्ह मोरी"

इत्यत्र सम्पूर्णपक्षया ग्रीष्ममयूर्य्या सह तुलयता भयचञ्चलचित्तां चामीकरचयमण्डितां सुसज्जितां वसन्तसेनामुपमाजगति समधि-कृतमुन्नतमासनमसुना। ततश्च "सुरगणपोतशिषस्य प्रतिपच्चन्द्रस्येव परिचयोऽपि ते अधिकतरं रमणीयः" अहो! किमनिर्व्वचनीया नामेयमुपमा! सरस्वतीविलासस्य कालिदासस्य "सूचिभेद्यैस्त-मोभि"रित्यतः

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्व्विफलतां गता॥"

इत्यन्धकारवर्णनं कं न सुखयति प्राञ्जलतया। अपिच—

"वाप्यां स्नाति विचक्षणो द्विजवरो, मूर्खोऽपि वर्णाधमः" अत्र वाप्या लतया नौकया च सह समतां घटयता, गणिकानां यद्वर्णनं प्रारब्धं साधुभाषया तदेव चरमपदवीमधिचकार।

दारिद्र मुक्षिश्य यत्किञ्चिदुपन्यस्तं स्वल्पाक्षरमसन्दिग्धं सारवच्च तदधुना प्रवादवाक्यरूपेण परिणतमाकर्ण्यते सर्व्वतः।

न किमपि परिलक्षितं श्रुतं वा अस्य कवयितुर्महाकाव्यं खण्ड-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



काव्यमपरं वा। किन्तु केवलवर्णविवर्णनसम्बलितं पञ्चमाङ्कमचि-विषयीकुर्व्वतामेषामहीयसी धारणा मादृशां यत्, यद्यसौ महाकाव्या-दिकं व्यरचयिष्यत्तदाधिकरिष्यदेव कालिदाससमानासनमसंशयम्। पञ्चमाङ्केऽस्मिन् भूयसि वक्तव्ये सत्यपि सयत्नं विरतैव वर्णतूलिका तादृशसमयाभावात्।

पार्थिवं प्राकृतिकञ्च सुखमकामयमानानाममृतान्वेषणाय व्याकुलं धावमानानामार्य्याणां साहित्येषु हास्यरसस्य अप्राचुर्य्यमिव परिदृश्यते। तेषां गीतिषु कवितासु च केवलं भूर्त्तिमती वेदना परिस्फुटा प्रचारयति आध्यात्मिकभावप्रवणतामन्तःकरणस्य सन्ततं, तेनैव प्रायेण रूपकेषु हास्यरसार्थं परिकल्पितो भवति एक एव विदूषको नाम तरलहासप्रयोजकः; सोऽपि आभजते स्थानं निम्नतममेव अपरपात्रसार्थेभ्यः।

किन्त्वस्मिन् हास्यरसपारावारः शकारो नाम कश्चिदभिनवो जनः प्रकल्पितो, न केवलो विदूषक एव।

असम्बद्धवाक्येषु पुनरावर्ज्जयता हास्यरसराशिममुना शकारेण सम्पादितमनीर्व्वचनीयविशेषत्वमस्य रूपकरत्नस्य। राजश्यालस्य मूर्खतादुष्टतादिप्रकटनपुरःसरं भूयो निन्दनीयचरित्रचित्रणे प्रासङ्गिकोऽयं हास्यरसोपक्रमो ग्रन्थकृतः सामाजिकजगत्यपि निरुपम एव।

एकेष्टकप्रदर्शनेन समग्रप्रासादसौन्दर्य्याभासप्रदानमिव एक-पांशुकणिकातुलनेन विपुलाचलगुरुत्वानुमापनमिव च असम्भवम् इव सम्भाव्यते केवलांशविशेषस्य अस्य रूपकस्य समालोचनेन सौन्दर्य्यस्य गुरुत्वस्य च प्रकाशनम्। दीर्घतो दीर्घतरतामासदयन्नपि प्रबन्धोऽयं मृच्छकटिकस्य सौन्दर्य्यप्रकाशनविधौ निराश एव परिलक्ष्यते।

पुरातनं सर्व्वमेव मनोरममिति संस्कारानुप्राणितप्राणैः पूर्व्वतनैः

४

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्व्वयुगे यथाशक्ति केवलं पौराणिकमैतिहासिकञ्च विषयमवलम्ब-मानैर्विरचितेन काव्यनाटकादिना परिपूर्णं समजनि संस्कृत-साहित्यागारम्। ततश्च नवीनभावविभवैः परवर्त्तिकविसमाजैर्नवीन-सामाजिकजनमानसानन्दजननाय विहाय पूर्व्वविनिर्द्दिष्टां सङ्कीर्ण-स्थलीमतिशयविवेचनया सुसल्लर्पणं विरचितं केवलकल्पनाबलेन काव्यमशेषविधम्। तादृशाभिनवपथेन संस्कृतसाहित्यसम्पत्ति-सम्बर्द्धनपरायणेषु सहनीयप्रभावप्रभवेषु कविषु दासीकृतकालिदासो भासः, अशेषरससमुद्रः शूद्रकश्च प्रथमतः सबहुमानमुल्लेखनीयः। कालिदासस्य "पुराणमित्येव न साधु सर्व्व"मित्यादुग्रक्तिस्ताभ्यां परत एव समाजसकाशे प्रचारयामास नवीनवादम्।

नानारसप्रस्रवणं प्रकरणमिदं भासेनैव प्रणीतं, न तु शूद्रकेण, अथवा भासकृतेरेव सम्प्रसारणं कृतं शूद्रककविना इत्यधुना संश्रूयते सर्व्वतो जनश्रुतिः। "त्रिमेन्द्रमतः" प्रकाशितस्य भास-विरचितस्य "चारुदत्तनाटकस्य" भूमिकायां श्रीमद्गणपतिशास्त्रिणा प्रदर्शितं सादृश्यमनवद्यं विषयगतं भावगतञ्च मृच्छकटिकस्य। भासविरचिता अनेके श्लोकाः कथञ्चित् परिवर्त्तिताः कुत्र वा अवि-कलाश्च प्रकरणेऽस्मिन् विराजन्ते। तथाहि भासविरचितस्य चारु-दत्तस्य प्रथमाङ्के—

"यासां बलिर्भवति मद्गृहदेहलीनां।
हंसैश्च सारसगणैश्च विलुप्तपुष्पः।
तास्वेव पूर्व्वबलिरूढ़तृणाङ्कुरासु।
बीजाञ्जलिः पतति कीटमुखावलीढ़ः॥"

मृच्छकटिके तु—

"यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्व्वः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तास्वेव सम्प्रति विरूढ़तृणाङ्कुरासु
वीजाञ्जलिः पतति कीटमुखावलीढ़ः॥" इत्यादीति शम्।

---

# आलोचनादशकम्।

( लेखकः—महामहोपाध्यायः श्रीजगन्नाथमिश्रः। )

श्रीदुर्गाचरण-प्रीतिसम्बलेन वलीयसा।
तर्काचार्य्यवचश्चर्चा काचिदत्र प्रपञ्चयते॥

इह खलु "संस्कृतसाहित्यपरिषदो" मुखपत्रे "गुरुशिष्यसंवाद" इत्यभिधानप्रवृत्तस्य प्रबन्धस्य द्वितीयप्रचारमधिकृत्य कौतूहलादेव किंचिद्विचारयितुकामः तत्र जल्पसुलभाक्षेपाद्यापादितदौर्मनस्या-प्रसक्तिभीतचित्त एवादौ पूज्यानामुपाध्यायदेशीयानां सविधे स्वा-पराधपरिमार्ज्जनाय बद्धाञ्जलिः सविनयं क्षमां भिक्षे। आशासे, बहुतरमनभिमतार्थं प्रतिपादयिष्यतोऽप्यस्य दुर्मुखान्तेवासिविशेष-मनीषयैवान्तेवासिजनहितैषणामात्रप्रवृत्तदुरूहार्थराशिसंकलनश्रम-भारमन्थरमतिभिः श्रीमद्भिर्दोषाः स्वात्मनि प्रसादावसादाय लेशतोऽपि नैव पोषेरन्निति।

तथाहि—

दोषा हि मत्सरदृशां खलु उन्मिषन्ति,
स्निग्धाः पुनर्गुणकणान् निपुणं गृणन्ति।
नैतावताद्यमतिर्थोभवदर्थवादौ-
दासीन्यमात्रमुचितं विदुषां दृशद्वत्॥ १॥
जानाम्यहं किमपि चेत् स्फुटभाषयाऽद्य
प्रस्तौमि, दूषणमथात्र गुणं तथापि।
कामं तु "मक्षिक"मिदं वत"मागधीय"
कर्म्मेति, मार्म्मिकजनैरपि गर्हितः स्याम्॥ २॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



छात्रस्य कृत्यमिति दोषमुषा न भाव्यं
नैकान्त्यमस्ति पदवृत्तिकृतार्थवृत्तेः।
"दोषा गुरोरपि पुरो विनतेन वाच्याः"
इत्यागमैरनुमतं, तदपीह युक्तम् ॥ ३ ॥
तत्साहसं भवदपि, प्रणयात् क्षमध्वं
यूयं हि लोकहितसंततिदत्तचित्ताः।
प्रक्षाल्य कायिकमलानपनेतुकामाः
सन्तो मलीमसतमं भसितं श्रयन्ते ॥ ४ ॥
नमो वः सर्व्वविद्यानां निधिभ्यः सन्निधीयते।
अधीत्य सन्निधौ येषामल्पबुद्धिः सुधीष्वपि ॥ ५ ॥

१। तत्र तावत् मङ्गले वेदबोधितकर्त्तव्यताकत्वानुमानमुपक्रम्य "यदेव वस्तु शिष्टैः परिपाल्यते, विगीतं लौकिकं च न भवति" इत्यादिना सामान्यव्याप्तिमुपजीव्य "मङ्गलस्य शास्त्रे अविगीतत्वात् अलौकिकत्वात् शिष्टपरम्पराचरणदर्शनाच्च" इत्युपनयवाक्यमुदाहृतम्। अथात्र अविगीतालौकिकेत्यादिदर्शितहेतौ अविगीतत्वमाचारस्य विशेषणमुत स्वातन्त्र्येणैव विनिवेशितम्? आद्ये, मङ्गलस्य शास्त्रे अविगीतत्वादित्युपनयांशप्रदर्शनासंगतिः। न हि हेतुरिव हेतुतावच्छेदकधर्म्मोऽपि योग्यः पक्षे उपनयनवाक्येनोपसंहर्त्तुमिति। न च कृतेरविगीतत्वेन कृतिविषयस्य विगीतत्वायोगात्तद्दृष्ट्या तथोपन्यासः संगच्छत एवेति वाचम्। उदाहरणोपदर्शितसाध्यव्याप्तिमत्तया प्रकृतहेतोः पक्षधर्म्मत्वप्रदर्शनमात्रस्याकांक्षानिवृत्त्युपयुक्ततया न्यायशरीरे अनाकाङ्क्षितस्यार्थान्तरस्य हेत्वाद्यविनाभाविनोऽपि उपन्यासानौचित्यात्। तथोपन्यासस्य प्रकृतेऽर्थान्तरतापादकत्वात्, साक्षादाकांक्षितस्य प्रकृतहेतौ पक्षधर्म्मत्वस्यानभिधानेन न्यूनत्वप्रसङ्गाच्च। अथ मन्येथाः मङ्गलस्याविगीतत्वे कृतिविषयत्वे च उपसंहृतेऽविगीतकृतिविषयत्वलाभो न दुर्घटः, क्रियाया विगीतत्वस्य कृतेर्विगीतत्वव्यापकतया तद-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भावस्य व्यापकाभावमुद्रया सती तावद्विगीतत्वाभावरूपव्याप्याभावं प्रति गमकत्वादिति। तन्न मनोरमम्, हिंसादेः कर्म्मणः स्वरूपतो विगीतत्वेऽपि क्वचिदाततायिप्रभृतौ हननकृतेरविगाणस्मरणात्। तथाहि, "प्राणिनामवधस्तात सर्व्वज्यायान्मतो मम। अनृतं वा वदेद्वाचं न तु हिंस्यात् कथंच न" इत्यादि भगवद्वचनबलेन हिंसायाः सर्व्वथाविगीतत्वावगमेऽपि—"अपि तं ब्राह्मणं वृत्तादयो हन्यादाततायिनम्। न तेन ब्रह्महा स स्यान्मन्युस्तन्मन्युमृच्छति" इत्यादिवचननिचयप्रामाण्यानुरोधेन तत्तत्प्रवृत्तिविशेषाणामविगीतत्वस्य शास्त्रकृद्भिरेवोपपादितत्वात्। न च वन्नाव्यमुपदर्शितवाक्ययोः क्रियास्वरूपमेव विगीतमविगीतं च विषय इति, विरोधात्, प्रत्युत पूर्व्वत्र देशकालजात्याद्यनुपरागेण हिंसासामान्यस्यैव विगीततायां वचनस्वारस्यावधारणसौकर्य्येण, उत्तरत्र देशकालजात्यादिनिमित्तोपजीवनेन तद्गोचरप्रवृत्तिविशेषस्यैवाविगीतत्वे तात्पर्य्यकल्पनसम्भवेन च विरोधस्य सुपरिहरत्वात्। वस्तुतः शब्देनैव जनितायाः प्रकृतहेतोः पक्षधर्म्मत्वाकाङ्क्षायाः,कयाचित् प्रणाल्या सम्भवन्त्यपि पक्षे हेतुसत्ता (पक्षधर्म्मता) या अनुमितिर्नैव निवर्त्तनाय प्रभवति। शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते (निवर्त्त्यते) इति न्यायात्। उपनयप्रयोगकाले प्राप्तं शब्दमुज्झित्वाऽप्राप्तवाक्यार्थानुमितिसामग्रीसम्पादनायासस्य चतुरसरणिचिरन्तनचारुतापचायकत्वात्; उदाहरणोपस्थापिताकाङ्क्षं प्रतिपित्सुं प्रति अतिपीड़ाकरत्वात्, न्यायजन्यमहावाक्यार्थादिबोधसामग्रीकुक्षौ विलक्षणानुमितिसामग्रीकृतावान्तरवाक्यार्थबोधसामग्रीव्यवधानस्यानुचिततया तावत्कालपर्य्यन्तमाकांक्षापरिपालनस्य सुतरां महाव्रतकल्पस्य क्वचिदेव तथाविधानुविधेयतमान्तेवासिविशेषे प्राज्ञानामाज्ञामात्रसम्पादनीयत्वप्रसङ्गाच्चेति। ०।

अन्येत्र, किमिदं विगीतत्वं नाम? निन्दितत्वमिति चेत्, तदपि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनिष्टत्वेन, अनिष्टजनकत्वेन वा आगमेनोत्कीर्त्तितत्वमभिमतं भवताम्? तत्राप्याद्ये, श्येनजन्यादृष्टस्य केनापि शास्त्रेणाऽनिष्टत्वेनाबोधनाद्व्यभिचारः। श्येनापूर्व्वस्याविगीतत्वस्य अलौकिकत्वस्य कृतिविषयत्वस्य च सत्त्वाद् वेदेन कर्त्तव्यत्वानवबोधनाच्च। न चादृष्टस्य कृतिविषयत्वाभावाद्विशिष्टहेत्वभाव इति वाच्यम्। कृतिविषयत्वं हि क्रियायां न साक्षाज्ज्ञानादिविषयत्वमिवाभ्युपगन्तुं शक्यं, कृतेः फलगोचरतायाः साक्षादनङ्गीकारात्। अतएवोक्तं वाचस्पतिमिश्रैः, साधनगोचरो हि पुरुषव्यापारो न फलगोचर इति। एवं च यथा साक्षात् शरीरगोचरया प्रवृत्त्या करचरणादिचेष्टाशतव्यवहितां दानहोमपरिचरणादिलौकिकवैदिकादिक्रियां निष्पादयन्त्या एव सा साऽपि क्रिया गोचरीक्रियते, तथा तज्जनितापूर्व्वमपि इति विवक्षासम्भवात्। प्रवृत्तेः पुरुषार्थपर्य्यवसानावसेयतया यागादिप्रवृत्तेर्यदा स्वर्गोऽपि विषयभावमृच्छेत्तदा कैव कथा तदवान्तरव्यापारभूतस्यापूर्व्वस्य? यत्तदपि कृतिविषयतां नाश्नुवीतेति। एतेन फले प्रवृत्तिं प्रत्युद्देश्यत्वाङ्गीकारात्, प्रकृते च फलव्यावृत्तविषयताया एव हेतुत्वेनोपादानात् नापूर्व्वे दर्शितदिशाव्यभिचार इत्यप्यपास्तम्। अपूर्व्वस्य फलविलक्षणतया तस्य पुरुषप्रवृत्तिविषयतायामभ्युपगम्यमानायां क्रियाव्यवहिताऽपि क्रिया साधारण्येव प्रवृत्तिविषयताऽवश्यमुपपादनीया भवतीति तत्र व्यभिचारस्य दुर्व्वारत्वात्। अतएवापूर्व्वस्य लिङर्थत्वं कार्य्यत्वं च मन्यमानैर्गुरुभिस्तस्य कृतिविषयताऽभ्युपगम्यते। न्यायनयेऽपि तत्र संप्रतिपत्तौ क्षत्यभावात् विवादस्त्वस्य लिङर्थतायामेवेत्यन्यदेतत्।

न च तत्रापि वेदबोधितकर्त्तव्यताकत्वरूपं साध्यमप्यव्याहतमिति कुतो व्यभिचार इति वाच्यम्। न खलु वेदबोधितत्वमात्रं साध्यं, तथा सति भोजनशयनादेरपि लौकिकस्य वेदबोधितत्वानपायादलौकिकपदस्य अव्यावर्त्तकत्वापत्तेः। न हि भोजनशयनादिनियमपरि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



संख्यादिविषयो, भोजनादिस्वरूपमस्पृशन्त एव तत्र नियमादिकं विधातुमीशते इति। श्येनादेरपि वेदबोधितत्वाबाधेन तद्व्यावर्त्तका-ऽविगीतपदस्यापि वैयर्थ्यापत्तेश्च। अपितु बलवदनिष्टाननुबन्धीष्ट-साधनत्वेन वेदबोधितत्वमेव तत्; तथाच श्येनाद्यपूर्व्वस्य तथात्वा-भावादव्यभिचारदोषस्याप्रसङ्गादनिस्तारात्। नाप्यनिष्टसाधनत्वेनागम-बोधितत्वं विगीतत्वम्। रात्रिश्राद्धादेः स्वरूपस्यानिष्टसाधनतयात्वागमे-नाबोधनात् तत्र व्यभिचारस्य दुर्व्वारत्वात्। न खलु रात्रिश्राद्धमिति प्रसिद्धश्राद्धविलक्षणं किञ्चित् कर्म्मान्तरमस्ति, यत्र शास्त्रेण विगानं श्रूयेत; तथाच श्राद्धस्वरूपं न विगीतं, अपितु रात्रौ श्राद्धस्य समा-चार एवेति एतत्पक्षे ( अविगीतत्वस्य स्वातन्त्र्येण उपादाने ) अवि-गीतपदेन तद्व्यावृत्त्यनुपपत्तेः। प्रत्युत व्यर्थविशेषणताप्रसङ्गपरि-जिहीर्षुभिः स्वयमेवोत्तरत्राविगीतत्वस्याचारविशेषणतायां संप्रतिपत्ते-र्दर्शयिष्यमाणत्वेन पूर्व्वापरविरोधस्य दुष्परिहरत्वाच्चेति।

२। अपि च "अनुमीयते येन तदनुमानमित्यनुपूर्व्वस्य माधातोः करणवाच्ये अनट्प्रत्यये कृते अनुमानमिति पदं निष्पन्नमिति ब्रुवाणानामाचार्य्यमहाशयानां लिखनं विचिकित्साविजृम्भितमिव प्रतिभाति।

यतो हि "अनुमिमतेऽनुमातारः" "अनुमिनुयाम्" इत्यादि-सांप्रदायिकप्रयोगस्वरसात् जुहोत्यादिगणीयस्य माङो वा स्वादि-गणीयस्य मिञो वा विशिष्य ग्रहणमेव शिष्यप्रतिपिपादयिषया प्रवृत्तानामत्र समुचितम्। माधातोरुपसर्गवशात् परिच्छेदमात्ररूपार्थ एव सकर्म्मकतया "उदरं परिमाति मुष्टिना" इत्यादौ प्रयोगस्य दृष्टत्वेऽपि क्वचिदनुमित्याद्यर्थे प्राचीनप्रयोगादर्शनात्। सर्व्वथाऽपि शिष्यव्युत्पादनोपक्रमे प्रचुरप्रयोगप्रसिद्ध्यनुरोधस्यैव ज्यायस्त्वेन तत्परित्यागानौचित्यात्। पर्व्वते वह्निमनुमिनोमीत्यादिना स्वयमग्रे मिञ एव प्रयोगस्योरीकृतत्वाच्च इति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



३। किं च "पक्षे वर्त्तमानो हेतुर्यदि साध्याभाववति न स्यात्, तदा तेन हेतुना जनिता अनुमितिर्न मिथ्या भवेत्" इत्येवं प्रतीकग्रहणं नार्थग्रहणाय सुग्रहं भवति।

तथाहि—अत्र पक्षे वर्त्तमानो हेतुः पक्षे एव साध्याभाववति न स्यादित्येवार्थः? 'पक्षे वर्त्तमानो हेतुः यत्र क्वचन साध्याभाववति न स्यादित्येव वा?। आद्ये, धूमवान् वह्नेरित्यादौ पर्व्वते पक्षे धूमसाध्यस्याभावविरहात् वह्निहेतोर्व्याप्त्यनुपपत्तिः, तस्यापि साध्याभाववत् पक्षावृत्तित्वात् पक्षवृत्तित्वाच्च। साध्याभाववतः पक्षस्याप्रसिद्ध्या तद्वारणे वह्निसाध्यकधूमहेतोर्दुःसंग्रहत्वप्रसङ्गात्। तत्रापि पक्षस्य साध्याभाववत्त्वाप्रसिद्धेः। यदि च साध्याभावानधिकरणपक्षवृत्तित्वमेव दलद्वयार्थं इत्येवं निष्कृष्यते, तदापि दर्शितव्यभिचारिहेतुव्याप्तिर्दुरुद्धरैव। व्यभिचारिणोऽपि वह्न्यादेर्धूमाभावानधिकरणपर्व्वतरूपपक्षवृत्तिताया अनपायात्। अथ यत्र क्वचन साध्याभाववति वृत्तिर्व्यावर्त्तते इति द्वितीय एव पक्षः? तदाऽपि व्यभिचारिवह्न्यादेः प्रतिज्ञं पर्व्वताद्यधिकरणेषु भिन्नत्वेन पर्व्वतरूपपक्षवृत्तेः साध्याभाववति अवर्त्तमानतया व्याप्त्यनुपपत्तिस्तदवस्थैव। हेतुतावच्छेदकधर्म्मप्रकारेण साध्याभाववति अवर्त्तमानत्वविवक्षणेऽपि उभयत्वमुभयत्रैव पर्य्याप्तमित्यभ्युपगमपक्षे, घटत्वादिसाध्यकघटत्वतदभाववदुभयत्वादिहेतोर्व्याप्तेर्दुष्करत्वात्। उभयत्वादेः साध्यवतीवसाध्याभाववत्यपि वृत्तेरनभ्युपगमात्। 'इदमुभय' मित्यादि लौकिकप्रत्यक्षताद्यनुरोधेनैव चास्योभयरूपपक्षवृत्तिताया अनपायाच्चेति। साध्यसमानाधिकरणस्याधिकस्य निवेशमन्तरेण तावन्मात्रेण (यथाश्रुतविवक्षामात्रेण) वारयितुमशक्यत्वात्। तावतापि वाच्यत्वादिकेवलान्वयिसाध्यकसद्धेतोः संग्रहस्य प्रयाससापेक्षत्वाच्च इति।

४। अथ "अनुमितिर्न मिथ्या भवेत्" इत्यत्र मिथ्याशब्दः अपह्नववचनो वा? अयथार्थवचनो वा? आद्ये, यथोक्तलिङ्गजनिताया

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनुमितेर्मिथ्यात्वाप्रसक्तौ प्रतिषेधानुपपत्तेः, प्रसक्तिपूर्व्वकत्वात् प्रतिषेधस्य ; प्रकृते च व्याघातादेवाप्रसक्तेः, नहि तादृशेन हेतुना जनिता सती अनुमितिर्मिथ्येति वचनमवकल्पते, स्वगोचरसम्बन्धविशेषपर्य्यवसन्नाया उत्पत्तेः स्वरूपसत्ताविरोधिनाऽपह्नवेन (अलोकेन) सामानाधिकरण्यानुपपत्तेर्वदत एव व्याघातादिति। अनुत्पन्नायाश्चानुमितेरसत्वादेव धर्म्मासिद्धौ सुतरां प्रतिषेधानुपपत्तेः। असतः प्रतियोगित्वस्येवानुयोगित्वस्यापि "व्यावर्त्त्याभाववत्तैव भाविकी हि विशेष्यता। अभावविरहात्मत्वं वस्तुनः प्रतियोगिते" त्यादिना आचार्य्यैर्निराकृतत्वात्। अन्त्ये च शिष्यव्युत्पादनप्रवृत्तानां निबन्धकृतशैलीसुलभपरिभाषालङ्घनदोषजंचालता अनिरस्तैव। न हि जघन्यां वृत्तिमन्तरेण स्वगोचरार्थमिथ्याशब्दः कथंचिदनुमितौ प्रसक्तये वा प्रतिषेधाय वा सुसम्पादः शक्यः कर्त्तुमिति। (क्रमशः)

---

## परिषत्सन्देशः

विगतफाल्गुनस्य एकोनत्रिंशदिवसे रविवासरे सायं सप्तमघटिकायां महामहोपाध्यायकल्पपण्डितप्रवरश्रीयुक्तकृष्णचरणतर्कालङ्कारभट्टाचार्य्यमहोदयानां आध्यक्षेण तन्मासीयसाधारणाधिवेशनं सुनिष्पन्नमभूत्। तत्र आदौ सभापतिमहोदयेषु यथानियमं स्वपदमलङ्कृतवत्सु सभ्यनामादिप्रचारानन्तरं निर्द्दिष्टं सभाकृत्यं प्रारब्धम्। निर्द्दिष्टं सभाकृत्यञ्चैतस्मिन् वारे न निबन्धपाठः,परं शास्त्रार्थमधिकृत्य पक्षप्रतिपक्षभावेन विचार एव, यो नाम सम्प्रति प्रायेण पण्डितेषु विरलप्रचारः समुपलभ्यते। तत्र एको विचारो न्यायशास्त्रमधिकृत्य महामहोपाध्यायश्रीयुक्तगुरुचरणतर्कदर्शनतीर्थानां तथा श्रीयुक्तपार्व्वतीचरणतर्कतीर्थानां माध्यस्थेन पूर्व्वपक्षकारि-श्रीयुक्तचण्डीचरणतर्कतीर्थस्य तथा उत्तरवादि-श्रीयुक्तकुञ्जविहारितर्कतीर्थस्य प्रावर्त्तत।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्यच्च स्मृतिशास्त्रमधिकृत्य श्रीयुक्तकृष्णचरणतर्कालङ्काराणां माध्यस्थ्येन पूर्व्वपक्षकारि श्रीयुक्तकृष्णप्रसन्नतर्कस्मृतितीर्थस्य तथा उत्तरवादि-श्रीयुक्तनिवारणचन्द्रतर्कस्मृतितीर्थस्य प्रावर्त्तत। द्वयोरेव विचारयोः पूर्व्वपक्षकारिणोरुत्तरपक्षकारिणोश्च समीचीनतया स्वपक्षसंरक्षणशैली प्रशस्यतमा जाता, मध्यस्थाः स्वस्वावधानविषयपूर्व्वपक्षोत्तरं स्वीकृतवन्त इति महदाशाख्यानमस्माकं पूर्व्वरीतिसमुन्मेषे। अन्तरान्तरा परिषदादिभिरेवं प्रबन्धे सम्पादिते महती शास्त्रोन्नतिः सम्भवेदिति वाढ़ं निर्व्वक्तुं शक्यते। अथ प्रायेण रात्रेः सार्द्धनवमघटिकायां सभाभङ्गो जातः।

विगते मासि शिवचतुर्द्दशीकालावकाशे आशानगर्य्यां निखिलभारतवर्षीय संस्कृतमहासम्मेलनं भवेदिति पूर्व्वमेवास्माभिरावेदितम्। तदिदानीम् सुनिर्व्वृत्तमेव विदांकुर्व्वन्तु श्रीमन्तः पाठकमहाभागाः। तत्र परिषदो निर्द्देशात् परिषत्पक्षमधिकृत्य पण्डितश्रीपशुपतिनाथशास्त्री-श्रीगोष्पतिरायचतुर्धुरीणकाव्यतीर्थश्चेति सम्पादकौ परिषदाचार्य्यः श्रीकालीपदतर्काचार्य्यश्च इति त्रयः प्रतिनिधिभूताः प्रातिष्ठन्त। निरपद्यत समीचीनतया तत्र परिषद्वृत्तान्तप्रचार इत्यत्र तत्रत्याः देशान्तरीणाश्च कतिपये तदवसरे सभ्यपदमङ्गीकृतवन्तः प्रमाणम्। संस्कृतसमुन्नतिमुद्दिश्य देशान्तरेषु यथा यथा प्रतिष्ठानमनुष्ठितं, तत्तदालोचनया लब्धा काचित्तद्विषयिणी विज्ञता च। एतादृशो हि महासम्मेलादिप्रबन्धः परस्परं देशान्तरवासिनां भावादिविनिमये महदेव साहाय्यम् अनुतिष्ठति, तेन च साहाय्येन बहुलमज्ञातं वस्तु प्रत्यक्षेण विदितं भवेदिति परिषदादिभिरेतादृशविधिषु महानुराग आधेय इति।

वार्षिकमहोत्सवे कर्त्तव्यस्य अभिनयस्य प्रबन्धो नाट्याचार्य्यैः सप्रयत्नमुपकल्प्यते, प्रतीक्षन्तां श्रीमन्तः कियन्तं कालं, यावच्छीघ्रं तदभिनयो भवतां नेत्रप्रीतिं मानसमोदञ्च जनयिष्यति इति।

---

## विशेषद्रष्टव्यम्।

इतः पूर्व्वमस्माभिः परिषत्पत्रिकायाः ज्यैष्ठमासात् प्रभृति वैशाखमासपर्य्यन्तं वर्षगणना कृता, अस्मिन् वर्षे तु चैत्रपर्य्यन्तमेव वत्सरो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गच्छति। अतः परं वैशाखादेव पत्रिकाया वत्सरो गण्यते। ये च एतद्वर्षे ज्यैष्ठात् प्रभृति वर्षं यावत् पत्रिकाग्रहणाय ग्राहकपदमासादितवन्तः, तेभ्यो वैशाखमासीयसंख्या पूरणाय अस्माभिरुपक्रियेत। एतस्य परिवर्त्तनस्य कारणन्तु अस्मद्देशे सर्व्वमेव वार्षिककृत्यं वैशाखमासात् प्रभृति वर्षगणनया निष्पद्यते, परिषदो वार्षिकमहोत्सवश्च वैशाखे भवति इति सभायाः कृत्यजातं पत्रिकारम्भादिकं तत्र एव समीचीनं स्यादिति।

---

## विविधकथा।

### सम्मेलने पुस्तकादिप्रदर्शनम्--

अग्रवणे ( आग्रानगर्य्यां ) संस्कृतमहासम्मेलनेन सहैव सम्मेलनप्रबन्धकृद्भिः किमपि नवीनदुर्लभग्रन्थादिप्रदर्शनमपि प्रक्रमितमासीत्, तत्र नानाविधा हस्ताक्षरमयाः पुस्तकाः प्रदर्शिता अभूवन्। तेषु च गुटिकाकारेण लिखिताः कतिपये पुस्तका विशेषतः समुल्लेख्याः। तत्र कश्चित् पुस्तकः प्रायेण पञ्चाशद्धस्तप्रमाणदोर्घः, तदभ्यन्तरे स्वर्णवर्णैरक्षरैः समग्रं श्रीमद्भागवतं निबद्धमास्ते। मान्यमान्यानां महाराजगायकवाँयाड़ानां पुस्तकालयाध्यक्षा अपि स्वसंगृहीतान् कांश्चन पुस्तकानदर्शयन्। जयपुरपत्तनस्थपण्डितप्रवराः श्रीमधुसूदनविद्यावाचस्पतयः आजमीरमण्डलस्थपण्डितप्रवराः श्रीचन्द्रधरशर्म्माणः गुलेरि वि-ए महाभागाश्च बहुनप्रकाशितान् ग्रन्थान् प्रददिरे। परञ्च बहूनां सुप्रसिद्धानां पण्डितमहत्तमानां चित्राणि तत्र प्रदर्शितान्यासन्। कृत्यमिदं श्रीयुक्त जे, एन्, चौधुरी एम्-ए, एल् एल् वि महोदयस्य प्रयत्नतो निष्पन्नमतः सुतरामसौ प्रशंसामर्हतीति विनिवेद्यते।

### अग्रवणसंस्कृतसभा—

संस्कृतमहासम्मेलनमधिकृत्य अग्रवणनगरस्थानां पुरुषाणां समुत्साहः सुतरां प्रशंसार्हः, यतस्ते महासम्मेलनकृत्यनिष्पत्त्या सहैव संस्कृतसमुन्नतिकामाः स्वनगरे काञ्चन स्थिरतया परिचालनीयां संस्कृतसभां स्थापितवन्तः, आशास्महे एवम् आदर्शमनुभूय अपरनगर-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वास्तव्या अपि स्वस्वनगरेषु तथा कृत्यमारभ्य संस्कृतमहासम्मेलनादीनां माण्डलिकप्रयत्नानां साफल्यं सम्पादयेयुः। भगवतः करुणासागरस्य करुणासम्पातेन संस्कृतमहासमितिशाखाभूतेयं नगरसमितिः सुदीर्घं जीवनं लब्ध्वा निराबाधा स्थेयात्।

## ममताजमन्दिरम् वा ताजमहलम्।

आग्रानगर्यां ममताजमन्दिरं वा ताजमहलं जागतिकानां सुप्रसिद्धानां सप्तानामाश्चर्य्यभूतानामेकतममाश्चर्य्यभूतं वस्तु। वस्तुत एव मर्म्मरशिलामयस्यास्य बहुलकालात्ययेऽपि अद्यैव निर्म्मितस्येव प्रतिभातस्य नानाविधारञ्जितप्रस्तरशोभिताभ्यन्तरभागस्य समन्ततो विपुलगगनस्पर्शि स्तम्भचतुष्टयविराजितस्य तस्य को वा निःशेषतया वर्णयिता स्यात् सौन्दर्य्यं प्रपञ्चे। किन्तु तत्पादलग्नायाः कालिन्दकन्यायाः सामग्र्येण शोषणात् श्रुतपूर्व्वमलौकिकं सौन्दर्य्यमस्य नावतिष्ठते, यत्र नीलसलिलशोभापूर्व्वमासीत्, तत्राद्य श्यामपीतास्तृणस्तम्बाः सिकताश्च तता च इति सविषादमुद्‌घुष्यते। यद्याद्य ममताजमन्दिरप्रियः सौन्दर्य्यं विज्ञानकुशलः सम्राट् साजाहानः समस्थास्यत, तदा नूनमसत्र ममताजमन्दिरव्याधिभूतसत्र यमुनाप्रवाहविलोपसत्र प्रतीकाराय परं प्रयत्नं अकरिष्यदहो दुरत्यया कालशक्तिः, यया सुन्दरमसुन्दरम् असुन्दरञ्च सुन्दरं भवति।

## ग्रयवणे श्रीकालीमन्दिरम्।

वङ्गदेशादतिदूरे प्राचीनाग्रवणनगर्य्याम् सुप्रसिद्धमेकं श्रीकालीमन्दिरं वर्त्तते। यत्र तत्रभवन्तः श्रीमन्तः श्रीशचन्द्रभट्टाचार्य्या अधिष्ठातारः। नगरोपान्ते विपुलायतने भवने श्रीकालीमातुः प्रतिष्ठानं, प्रायेण आग्रानगरीं प्राप्ताः सर्व्व एव वङ्गदेशीयाः तत्र मातृदर्शनाय गच्छन्ति, गत्वा च तत्रभवतामधिष्ठातृप्रवराणां सौजन्येन परितुष्यन्तो देवमन्दिरान्तरव्यवहारेषु द्वेषवन्तो जायन्ते। आशास्महे यत् श्रीमत्याः कालीमातुः प्रसादेन सुचिरं सौजन्यं परिपालयन् अत्रभवानधिष्ठातृमहोदयः परिजनैः सार्कं सुखमवतिष्ठमानः वैष्णवधर्म्मबहुलेऽपि देशे प्राशस्त्येन शक्तिभक्तिप्रचारं विधेयादिति।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

বঙ্গদেশের মহামান্য গবর্ণর বাহাদুর অনারেবল লরেন্স জন্ লাম্‌লে
ডাণ্ডাস্ আর্‌ল্ অব্ রোনাল্ডসে জি, সি, আই, মহোদয়
ঢাকা শক্তি ঔষধালয়ের কারখানা পরিদর্শন করিয়া যে
অভিমত লিখিয়াছেন তাহার বঙ্গানুবাদ ঃ—

"আমি ১৯২০ সনের ১৭ই জুলাই তারিখে ( ঢাকা ) শক্তি ঔষধালয় পরিদর্শন করিয়াছি এবং ঔষধালয়ের স্বত্বাধিকারী বাবু মথুরামোহন চক্রবর্ত্তী, বি, এ, আমাকে কারখানার সকল বিভাগই দেখাইয়াছেন। আমি যাহা যাহা দেখিলাম, তাহাতে অতিশয় আকৃষ্ট ও আনন্দিত হইলাম। কারখানায় এত বহুল পরিমাণে আয়ুর্ব্বেদীয় ঔষধ প্রস্তুত হয় দেখিতে পাইয়া আমি বিস্ময়াবিষ্ট (astonished) হইয়াছি। ধাতুঘটিত এবং উদ্ভিজ্জাত ঔষধের প্রস্তুতকরণ অতি পূর্ণবেগে চলিতেছিল এবং বহুসংখ্যক কবিরাজ ঐ কার্য্যে নিযুক্ত ছিলেন। এরূপ বিস্তৃতভাবে বিশুদ্ধ ঔষধাদি প্রস্তুত করিয়া জনসাধারণ, এমন কি নিতান্ত দরিদ্র লোকদিগকেও যথাসম্ভব অল্পমূল্যে ঔষধাদি ব্যবহারে সুযোগ দেওয়াই অধ্যক্ষ মহোদয়ের উদ্দেশ্য। এই কারখানার সংশ্লিষ্ট একটী সংস্কৃত টোলও প্রতিষ্ঠিত আছে। সেই টোলে ২০ জন ছাত্র খাওয়া, পরা, বাসস্থান ও অধ্যাপনা বিনা ব্যয়ে পাইয়া থাকে এবং তথায় দর্শনশাস্ত্র ও আয়ুর্ব্বেদশাস্ত্র শিক্ষা দেওয়া হয়।

"বাবু মথুরামোহন চক্রবর্ত্তী প্রাচীন আয়ুর্ব্বেদশাস্ত্রের ব্যবস্থানুযায়ী ঔষধাদি প্রস্তুত করিয়া, ঔষধগুলির চরম উৎকর্ষসাধনে সমর্থ হইয়াছেন বলিয়া আমার বিশ্বাস এবং তিনি এই কার্য্যে যে সাফল্য লাভ করিয়াছেন, সেই সফলতার তিনি সম্পূর্ণরূপে উপযুক্ত পাত্র। আমার আশা এবং দৃঢ় বিশ্বাস যে, তাঁহার এই অভিনব কার্য্যোদ্যম উত্তরোত্তরই অধিকতর সাফল্যের দিকে চিরদিন অগ্রসর হইতে থাকিবে।"

ঢাকা
১৭-৭-২০

( স্বাক্ষর )—রোণাল্ড্‌সে।

( ১ ) শক্তি-ঔষধালয়ের কারখানা স্বামীবাগ রোড, ঢাকা। ( ২ ) হেড অফিস পটুয়াটুলী ষ্ট্রীট, ঢাকা ( ৩ ) কাশীব্র্যাঞ্চ দশাশ্বমেধ ঘাট, বেণারসসিটি ( ৪ ) রঙ্গপুর ব্র্যাঞ্চ রঙ্গপুর ( ৫ ) কলিকাতা হেড আফিস ৫২।১ বিডন ষ্ট্রীট কলিকাতা ( ঐ ) বড়-বাজার ব্র্যাঞ্চ ১৩৪নং হারিসন্ রোড ( ৭ ) শিয়ালদহের মোড়, ব্র্যাঞ্চ ১৩৪নং বৌবাজার ষ্ট্রীট কলিকাতা ( ৮ ) ভবানীপুর ব্র্যাঞ্চ ৭৪।১ রসারোড কলিকাতা। টেলিঃ —শক্তি ঢাকা।

ক্যাটলগের জন্য পত্র লিখুন

অধ্যক্ষ—
শ্রীমথুরামোহন চক্রবর্ত্তী।
ঢাকা।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



গুণে অদ্বিতীয়, গন্ধে অতুলনীয়, শিরোরোগের মহৌষধ। এক শিশি ১৲ টাকা, ৩ শিশি ২৸০, ৬ শিশি ৫৲ টাকা, ১২ শিশি ৯৸০, একগ্রোস ১০৮৲ টাকা, ডাকমাশুল স্বতন্ত্র।

---



রক্তদুষ্টির মহৌষধ। শরীরের দুর্ব্বলতা দূর করিয়া কান্তি ও পুষ্টি বর্দ্ধনে অদ্বিতীয়। ১ শিশির মূল্য ১৸০ দেড় টাকা, ৩ শিশি ৩৸০ আনা, ৬ শিশি ৭৸০ সাড়ে সাত টাকা, ডাকমাশুল স্বতন্ত্র।

## সি কে সেন এণ্ড কোং লিমিটেড

২৯ নং কলুটোলা ষ্ট্রীট, কলিকাতা।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

१८४२ शकीये माघे

३य वर्षस्य ८म संख्या




संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम् ।

सम्पादकः—

श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः ।

सहकारिसम्पादकः—श्रीकालीपदतर्काचार्य्यः ।

—:*:—



प्रिण्टार—श्रीकुलचन्द्र दे, शास्त्रप्रचार प्रेस, ५नं छिदाममुदिर लेन, कलिकाता ।

प्रकाशकः—

श्रीजानकीनाथकाव्यतीर्थः ।

संस्कृतसाहित्यपरिषद्भवनम्, श्यामबाजार ब्रीजरोड, कलिकाता ।

प्रतिखण्डमूल्यं ।० चतुराणकम् । ] [ वार्षिकमूल्यं ३, रूप्यकत्रयम् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

## কেশরঞ্জন তৈল। (সর্ব্বপ্রকার শিরোরোগের মহৌষধ।)

ইহা ব্যবহারে কেশহীনতা (টাক), মস্তকঘূর্ণন, মস্তিষ্কের দৌর্ব্বল্য, সর্ব্বদা মন হু হু করা, কর্ত্তব্য কার্য্যে অনিচ্ছা, অনুচিত শুক্রব্যয় ও অধিক মাদক সেবন জন্য পীড়া, দর্শন ও শ্রবণশক্তির অল্পতা এবং অকালপক্কতা প্রভৃতি যাবতীয় শিরোরোগ আরোগ্য হইয়া মস্তিষ্ক শীতল ও চক্ষুর জ্যোতিঃ বৃদ্ধি হয়। সুগন্ধ মানসিক পীড়ায় অত্যন্ত উপকারী; এজন্য এই তৈলকে বিশেষ রূপে সুগন্ধি করা হইয়াছে। যাঁহারা সৌন্দর্য্য ও স্বাস্থ্য উভয়ই রক্ষা করিতে চাহেন, তাঁহারা এই তৈল ব্যবহারে বিশেষ ফললাভ করিতে পারিবেন।




এক শিশির মূল্য ১৲ এক টাকা, ডাঃ মাঃ ও প্যাকিং ।/০ পাঁচ আনা, একত্র তিন শিশি লইলে ২॥০ আড়াই টাকা, মাশুলাদি ।৷/০ আনা; বড় এক শিশির মূল্য ৩৲ তিন টাকা। ইহাতে ছোট শিশির চারিগুণ তৈল থাকে।

## সঞ্জীবন রসায়ন।

ইহা বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ। স্নায়বীয় দুর্ব্বলতার জন্য যাঁহাদের উদ্যম-উৎসাহশক্তি-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অজীর্ণ অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে **সঞ্জীবন রসায়ন** অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহাদ্বারা বমন, বমনেচ্ছা, উদ্গার, হিক্কা, আধা (পেটফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রব সমূহ অচিরে নিবারিত হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য ও স্নায়বিক দুর্ব্বলতা নিবারণ জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ এক টাকা মাত্র। মাশুলাদি ।৶

## ১৪শ সংস্করণ সচিত্র কবিরাজি-শিক্ষা। পরিবর্দ্ধিত

### শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার **সঙ্কলন**। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত। অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও ইহা একখানি নিত্য-ব্যবহার্য্য গ্রন্থ। নাড়ী-পরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি-প্রস্তুত-বিধি, এবং বিষ চিকিৎসা, দীর্ঘজীবন-লাভের উপায় স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা ও দ্বিতীয়খণ্ডস্বরূপ মহর্ষি[illegible] গৌরব—সুশ্রুত-সংহিতা অষ্টম সংস্করণে সন্নিবেশিত হইয়াছে। এত অল্পকালের মধ্যে নয়টি সংস্করণে ভারতের সর্ব্বত্রই কবিরাজি-শিক্ষার উপাদেয়তা প্রতিপন্ন হইয়াছে। মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ৸০ বার আনা।

গবর্ণমেন্ট মেডিকেল ডিপ্লোমাপ্রাপ্ত **কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং**

১৮।১নং লোয়ার চিৎপুর রোড, কলিকাতা।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत् ।

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४२ शकीय—माघे ३य वर्षस्य ८म संख्या ।

## सुभाषितम् ।

[ अनुवादकः—श्रीजानकीनाथसाहित्यशास्त्री ]

धीरं गजे राजपथे प्रयाति
श्वानः समन्ताद्विफलं भषन्ते ।
निन्दाख्यसूयावशदुर्जनाना-
मकर्णपातं विचरन्ति सन्तः ॥ *

---

## शूद्रकस्तत्काव्यञ्च ।

[ लेखकः—श्रीगोपालचन्द्रकाव्यव्याकरणतीर्थः ]

येषामसीमप्रतिभासम्पदा संस्कृतसाहित्यकोषागारमतुलैश्वर्य-सम्भारालङ्कृतं समजनि, यांश्च समुपलभमाना अमरावतीसमाना

---

*'हाथी चले बाजारमे
कुत्ता भौंके हजार—इत्यादि
तुलसीदास ।

† परिषदधिवेशने पठितः प्रबन्धः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विभासते विश्वसकाशे विगतविभवसल्लाना अपि भारतभूमिरियमिदानीमपि; येषाञ्च लेखनी पीयूषरसनिस्यन्दिनी चिरस्मरणीयतां सम्पादयामास विलुप्तसर्व्वविभवस्यापि भारतवर्षस्य, सारदासमर्च्चनैकव्रतेषु तेषु अशेषशास्त्रसागरावगाहनसुनिर्म्मलमतिः शूद्रको नाम नृपतिर्म्महनीयकृतिरिकतमतया निर्द्दिश्यते ससंभ्रमप्रसारितकराग्रैः समग्रैः कोविदकुलाग्रगण्यैः ।

किन्तु तदितिहाससङ्कलनविधौ स्वभावत एव अशेषाभिलाषसमावृतचेतसां गवेषणाकुशलिनामपि विमुखतामवलम्बते प्रतिभा उत्तरमेरोराविष्करणस्पृहेव प्रतिपदं, यतो ग्रन्थप्रणयनवर्त्मना समन्नासमाचारसंग्रहस्य लालसालेशाभावतो न विरचितः परिचयः प्रायेणैव पूर्व्वकविकुलैः स्वकृतिषु अन्यस्मिन् वा। आधुनिकानामिव इतिहाससङ्कलनरीतिरपि नासीत् पूर्व्वतनानामतस्तदाविर्भावादिविषयविनिर्णयपथे संशयसलोमसराशिसमावृते अनुमानवर्त्तिमन्तरेण साहायकमपरं किमपि वस्तु न प्रतिभातीह इत्यतोऽनुमानमनुसरन्तो भ्रान्तिसन्ततिसङ्कुला अकुशला अपि वयमग्रेसराः सावधाना अवधारयितुं तत्। क्षमायामक्षमसमाजश्रेष्ठानां मादृशां क्षमता नैव प्रभविष्यति तादृशकौतूहलनिरसनाय सुधीसमाजानामिति जानीमह एव, तथापि चापल्येनैव मुखरीकृता वयं गुरुतरविषयेऽस्मिन्निति सर्व्वतः क्षमार्हा भविष्यामः ।

प्रशस्तिभाजा "उइलियमस" महोदयेन विनिर्णीतं, यत् खृष्टीयप्रथमशताब्दीतः प्राचीनः कविरसौ शूद्रकः इति। खृष्टीयसार्द्धशतवत्सरपरवर्त्तीति पुनरभिमतिर्म्मतिमतामवगतैव अध्यापकधुरीणस्यलासेनाख्यस्य"। खृष्टस्य वर्षशतद्वयात् प्राक् वर्षशतद्वयानन्तरं वा तत्सत्तासीदिति अपरेऽपि विचारचतुराणां पाश्चात्त्यमनीषिमण्डलीनां मतवादा विदारयन्ति सन्ततमनन्तमार्गम् ।

अस्मद्देशे तु—वाणस्य अगण्यनैपुण्यनिदर्शनभूतायां कादम्बर्यां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकृतिचित्तरञ्जकः शूद्रको विदिशाधीश्वरः सम्बभूवेति ; सूक्तिसागर-कथासरित्सागरसमालोचनेन लोचनविषयोभवति यत् शोभावती-नगरीशोभकोऽसौ नृपकुलतिलक इति, वर्द्धमानं वर्द्धयामास स्वशासनकौशलेन इत्येवं च कथयति वेतालपञ्चविंशतिः।

दशकुमारचरितेऽपि असीमचमताविषयोऽनुभूतिविषयोभवति तावदमुष्य विशेषामेव। चकोराधिपतेश्चन्द्रकेतोर्वैरिपदमधिचक्रा-रासाविति हर्षचरितम्। विक्रमैकावतारस्य विक्रमादित्यस्य पूर्व्व-पुरुषोऽयमित्येवंभाषिणी राजतरङ्गिणी। एकदा आसन्नगमनः शत-दमनोऽसौ शूद्रकः केनापि समुदारमनसा विप्रान्वयजनुषा स्वकीय-शतवर्षमितायुषा मृत्युकवलपरिरक्षितो बभूवेति किंवदन्ती कथा-सरित्सागर-वेतालपञ्चविंशतिहितोपदेशीयविग्रहेषु विभासते च। स्वकृतावपि— "लब्धा चायुः शताब्द"मित्यादि दृश्यते।

कलेः सहस्राधिक-द्विशत-नवतिवत्सरप्रमिते शताधिकोन-नवति-खृष्टीयाब्दे विक्रमादित्यस्य सप्तविंशतिवर्षतः पूर्व्वं साम्राज्य-शासनं कृतवानासीदसौ नृपतिरित्येवं भारती स्कन्धपुराणीया समा-कर्षति मानसं। अस्मद्देशेऽपि एवमेतस्य बहुशः समुल्लेखेन देश-देशान्तरं कीर्त्तितकीर्त्तिविंक्रमादित्याग्रवर्त्तीराजचक्रवर्त्ती सम्बभूवासौ एतदतिरिक्तं एतत्सर्व्वमेव तद्विषयकं उपन्यासवत् प्रतिभासते सकाशे सर्व्वेषां। अध्यापकश्रेष्ठेन "उइलसन्" महोदयेन अभिहितं यत्, रामायण-महाभारतानन्तरं पुराणेतिहासप्रकाशाच्च प्राक् शूद्रकोऽसौ प्रणीतवान् प्रकरणं "मृच्छकटिकं" नाम। किन्तु तत्रैव "निहत्य शुम्भनिशुम्भौ यथा देवी" "जयतु वृषभकेतुर्दक्षयज्ञस्य हन्ते"ति पुराणप्रसिद्धवृत्तान्तपरिदर्शनात् तन्मतमवलम्बितुम् न प्रसरति प्रवृत्तिर्लेशतोऽपि मादृशाम्। "चाणक्येन यथा सीते"ति अवलोकयतां परस्पर-विरुद्धमतशतञ्च समालोचयतामेषैव बुद्धिः बलवती मादृशां, यत् चन्द्रगुप्तात् किञ्चित्परवर्त्ती अनिश्चितसमयपरि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गृहीतजन्मा प्राचीनतमोऽयं कवयितेति। अमुष्य प्राचीनत्वे तु सरलतामयी सुललिता अलङ्कारायासपरिशून्या भाषैव परमं प्रमाणम्। उत्पत्तिसमयसंशयशालिनामपि विश्वेषां गवेषकशिरोमणीनाम् प्राचीनतमत्वेऽस्य न लेशतोऽपि मतिवैषम्यं प्रतिभासते।

दक्षिणभारतमेव स्वजन्मना पवित्रीकृतममुना मनीषिणेति पिचेलमहोदयेन विवर्णितं। रचनासु तदीयासु तत्प्रदेशीय-वचनावलीमवलोकयतामस्माकमभिमतिरपि आभजति तन्मतमेव साग्रहम्।

स्वकृती यावान् परिचयः प्रकल्पितः "ऋग्वेदं सामवेदमित्यादिभिः श्लोकैः, तेन तु घनीभावमिव अवलम्बते संशयान्धकारः। यतोऽसौ नाम्ना शूद्रः, कृतिकलापेन समरव्यसनी अवनीश्वरः, व्यवहारेण च तपोधनो ब्राह्मणः; कुत्र शासनदण्डं परिचालयामास तस्यापि नोल्लेखमकरोत्; तत एव केनापि भावुकवरेण परिलिखितं "शूद्रकः" इति नामैव कल्पितं—तथाहि नामोल्लेखने, वैदिकसंस्कारसंशोधितमनसां तत्समयवर्त्तिनां समाज-धर्म्मसाधनैक-कर्म्मणां नासीदल्पीयसी प्रवृत्तिरपि आधुनिकसमये यथा तदानीम्। अपिच "एवं समाजवर्णनं करिष्यामि" इति प्रतिजानानाः केऽपि सन्तः अस्मद्देशमधिवसन्तः न सञ्चालयामासुर्लालसां ग्रन्थप्रणयनविधौ। किन्तु "अवन्तिपुर्य्यां-"मित्यादिना तदेव विहितं मृच्छकटिकप्रणेत्रा। समाजवर्णनचिकीर्षूणां स्वाभिधेयसंगोपनप्रयासबाहुल्यपरिदर्शनेन कोऽपि सुचतुरो नाटकरचयिता समाजस्य विशालतमशूद्रजातेर्नामानुसारेण शूद्रकेति संज्ञां स्वीकुर्व्वाणः, ब्राह्मणक्षत्रियसुलभगुणराशीशं समग्रसमाजप्रतिरूपस्वरूपं स्वमेव, राजोपाधिना समलमकरोदिति। स्वलिखितं मृत्युविवरणञ्च समीचीनतामवलम्बितुं समर्थयते एवमनुमानानुसरणेन। यद्यथा शास्त्रानुशासनेन मानुषाणां जीवितं शतवर्षपरिमितमिति, समाजप्रतिरूपकस्यापि केवलस्यायुरवलम्बते तादृक्परिमितमेव समयम्। मृत्योरनन्तरमपि अशौचसमयान् दश-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिवसपरिमितान् लोकान्तरगमनाशक्यतया इह लोक एवावस्थिति-मृतानामतः समाजप्रतिरूपस्य एकस्य दशदिवसाधिकशतवर्षी जीवितकालः ; ततश्च पूर्व्वसमाजप्रतिरूपस्य पुत्रत्वेनाविर्भवति द्वितीय-समाजप्रतिरूप इति "राजानं वीक्ष्य पुत्रं" "लब्ध्वा चायुः शताब्दं दश-दिनसहित"मित्युक्तेः समीचीना सङ्गतिः । वयन्तु बहुषु प्राचीनग्रन्थेषु शूद्रकसंवादमुपलभमाना मुद्रिताननाः एवात्र यतामहे विषयान्तर-समनुशीलने ।

तदितिहासान्वेषणान्धानामपि देदीप्यते सन्ततमन्तःकरणं तदीया-लौकिकप्रतिभालोकेन मद्विधानां । सुदूरातीतक्रोड़मधिवसता तेन या कृतिः प्रकटीकृता पृथिवीतले, निश्चितेतिहासाभावेऽपि सैव आप्रलयममरासनं दास्यति तस्मै ।

महामनीषिशिरोमणी रूपकारोपकाणामग्रणीः समाश्रितसदा-चारसरणिः धरणीनायकः शूद्रकोऽसौ नायकमणिरिव सद्गुणगुम्फि-तायां कविकुलहीरकहारलतायां संशोभते सर्व्वदा । अनल्पकल्पना-कलितमानसं कालिदासविलासं मानुषमपि यञ्च, अमानुषसुलभ-भक्तिपुरःसरमर्च्चयन्ति अभ्रान्तकर्म्माणो मनीषिणः । येन च अतुल-कल्पनातुलिकासहायेन अकल्पनीयशीलललितं परिकल्प्य, अशेष-दोषकलितं वेशवनिता-चरितं कारुण्यरसपरिप्लवचेतसो दर्शिता सहानुभूतिरतितरां पापपूतिसमाकुले पतितानां कुले । यस्य च कुशलतामयी लेखनी चारुचरितस्य चारुदत्तस्य शोचनीयपरिणामं वर्णयन्ती, प्रवाहयामास आयसकठिनात् प्रचण्डकोपस्य चाण्डालजनस्य हृदयकन्दरादपि कारुण्यरसप्रवाहिणीं विदारयन्ती मर्म्मस्थलीम् । ससीमस्यापि असीमज्ञानप्रभवस्य, असुधाकरस्यापि सुधाकरस्य, मृत-स्यापि अमृतायमानस्य, ऋग्वेदबहिर्भूतस्यापि सूक्तमयस्य तस्य कवेरसाधारणकवित्वमृत्तिकासुगठितं मृच्छकटिकं नाम रूपकं रोचते चिरन्तनकालावधि चेतसि समभावेन शरीरिणाम् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रसादगुणभूयिष्ठं यन्नाम प्रकरणं असीमहास्यरसनिरन्तरतया सन्ततं समाश्रीयते क्रीड़ाकलेव अशान्तशीलैरपि बालकैः। शृङ्गार-रससागरे अपारे यत्र अहर्निशं सन्तरणं सञ्चयते अनुरागरञ्जितानां युवकयुवतीजनानां, यच्च अनन्तसंशयकण्टकदुस्तरे संसारकान्तारे निर्द्दिशति कृत्यवर्त्माहो! करुणाकलिलचेताः सदुपदेष्टेव सर्व्वदा। शमनशयाक्रष्टतुषारशुभ्रकेशकलापानां कायानुकृतकरभविलासानां, वैतरणीसन्तरणैकतरणीभूतानां धर्म्मतत्त्वानां अन्वेषणपरायणाना-मपि रतिरमितिर्वरीवृत्यते च यस्मिन्। बर्द्धयति अनुरागं नवं नवं नूतनवधूरिव धवानां प्रसादगुणसरसा यस्य हि भाषा कोकिलकाकली-निकाशा। क्षणे क्षणे चित्रं लक्षयति च चित्तं घटनावैचित्र्यमनि-र्व्वचनीयं नाम यस्य महाभारत-भारतीव नितराम्। प्रलोभयति हि सुनीतिसंयतस्वभावमनिन्दितप्रभावमपि सूरि-समाचारं यस्यैव च अमणिरत्नखचिता असुवर्णापि अलङ्कारावली, न तु ललितललनाङ्ग-ललामालङ्कारावली अमूल्यमणिरत्नमयी।

यच्च मृच्छकटिकमपि आविष्कृतगोशकटकं, असीमदैन्यदशा-परिपोषकमपि बहुवर्णितचारुदत्तं, अबुद्धावतारमपि मैत्रेयजनपरि-सेवितं, असुकृतिसंस्थानमपि सुकृतिसंस्थानकं, अवसन्तसमयमपि वसन्तसेनासमाकुलं, निधूतमपि धूतालिङ्गितधवं, पत्रमयमपि सम्बा-हककृतिस्थलं, आवन्तिकमपि माथुरकजनसम्भवं, अदर्द्दरमपि दर्द्दरकारावमुखरितं, अमलयाचलमपि चन्दनकसुरभिशीतलं, पार्थिवमपि निर्गन्धं, वर्णमयमपि निर्व्वर्णं, निर्व्वनमपि मधुर-रससागरं पुष्पकरण्डककाननकान्तञ्च, चौरशास्त्रबहिर्भूतमपि चौर्य्यचातुर्य्य-प्राचुर्य्य-प्रचारकं, विशालमपि समुज्ज्वलराजशालञ्च।

निरङ्कस्यापि दशमाङ्कसमलङ्कृतस्य, व्याकरणशास्त्रबहिर्भूतस्यापि ससूत्रधारस्य अलोहितस्यापि शृङ्गारप्रधानस्य तस्य मृच्छकटिकाभि-धेयप्रकरणस्य, समीचीनसमालोचने अक्षमापि अक्षरजननी अस्मत्-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सम्बन्धिनो, केवलमेकानिर्व्वचनीयावेगसञ्चालिता चापल्यप्रदर्शनायैव साम्प्रतमग्रवर्त्तिनो ।

प्रख्यातरचयितॄणामिदमेवाधिकरोति निदर्शनपदवीं यत्तेषां लिपिनैपुण्यं परस्परसुदृढ़सम्बद्धं, मुख्यविषयानुकूलञ्चेति । नान्दो श्लोकद्वयमेव कवेरस्य तादृशलिपिकौशलं प्रकटयत् प्रथमत एव प्रशस्तिवार्त्तां प्रचारयति सर्व्वतः । तथाहि—"पर्य्यङ्कग्रन्थिबन्ध-द्विगुणितभुजगाश्लेषसंवीतजानो"रित्यादि प्रथमश्लोके श्मशानालयस्य समाधिसागरनिमग्नस्य योगीश्वरस्य संसारस्य असारताज्ञापिका अचञ्चला मूर्त्तिः सूचयति दर्शकानां सविधे प्रागेव अभावशतप्रतोली-ताड्यमानस्य विपत्पारावारे प्लवमानस्य ग्रन्थनायकस्य चारुदत्तस्य प्रदोप्तकर्त्तव्यज्ञानसमलङ्कृतां व्यसनप्रभञ्जनताड़ितामपि सुस्थिरां सर्व्वशून्य-संसारश्मशानासीनां महायोगिमूर्त्तिम् ।

"पातु वो नीलकण्ठस्य"त्यादिद्वितीयश्लोकेनापि दारिद्र्यगरल-जर्ज्जरितस्य वसन्तसेनासमालिङ्गितकण्ठस्य चारुदत्तस्यैव भावि-चित्रस्य चित्रणप्रयासो दर्शकजनचित्ते साफल्यमलभत भावुककवेः । अतो नाटकोल्लिखितं सर्व्वं नान्दीश्लोकद्वयमेव हि संसूचयति इत्युक्तिर्मन्ये नासमीचीना भविष्यति ।

तदनु प्रस्तावनाऽपि निरतिशयपाटवघना—

"शून्यमपुत्रस्य गृहं चिरशून्यं यस्य नास्ति सन्मित्रम् ।
मूर्खस्य दिशः शून्याः सर्व्वं शून्यं दरिद्रस्य ॥"

"शून्येत्यत्र" इत्यादिना सूचिता इयं सूत्रधारोक्तिरपि मित्रकुला-दर्श मैत्रेय-परिसेवितस्य अधीताशेषशास्त्रस्य सपुत्रस्य ग्रन्थनायकस्य सर्व्वशून्यतामेव द्योतयति । "प्रचलिततारके क्षुधा ममाक्षिणी खट-खटायेते" इत्यपि प्रथमत एव प्रचारयति असम्बद्धप्रलापकस्य शकारस्य अचिन्तनीयं वचनचातुर्य्यम् । अतोल्लिखिता दरिद्रभाव-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रेमसस्पृहादयः रूपकान्तर्गततत्तद्विषयस्मारकाः। सूत्रधारनटी-वचनविन्यासस्य निरतिशयस्वाभाविकतया नाटकान्तर्गतदृश्यवदाभासमाना प्रस्तावनेयमुपरिचरीतररूपकप्रस्तावनातः इति ससाहसमुच्चैर्वक्तुं शक्यते।

किन्त्वियं प्रस्तावना शूद्रकपरिलिखिता किन्वेति भूयान् सन्देहावसरः। मादृशां मतिस्तु नैव प्रसरति सहसा तत्कृतिस्वीकरणे, तथाहि—स्वप्रशंसावादविमुखानां पुरातनकवीनाम् अनेकशः प्रशंसा-वाद-गहना प्रस्तावना शिष्यादिभिः परिलिखिता भवेदिति किंवदन्ती, पुनश्च "चाश्वमेधेन चेष्ट्वा" इत्येवं प्रयासबाहुल्यसूचिका शिशुजनसुलभा रचना, न कदापि तादृशनिपुणलेखनी-प्रसूता भवितुमर्हति।

श्रीचारुदत्तवसन्तसेना-प्रणय-व्यापार-वर्णनं प्रधानोद्देश्यमस्य, गौणन्तु समाजस्य राज्यस्य च अवस्थाप्रकाटनम्।

एकदृश्यानन्तरं वर्षद्वयपरिवर्त्तिव्यापारभूयिष्ठानां मर्त्त्यव्यापारानन्तरमेव स्वर्गादिदृश्यगहनानां "अभिज्ञानशकुन्तलोत्तरचरितादि" रूपकाणामभिनयपरिदर्शकानां निरतिशयमस्तिष्कपरिचालनमन्तरेण, न जायेत रसग्रहः केषामपि, पञ्चमदिवसीयघटनामात्रसम्बलितस्य केवलोज्जयिनीदृश्यसमलङ्कृतस्य एतस्य तु अभिनयरसं भावनालेशमन्तरेणैव रसनाविषयीकर्त्तुं समर्थयन्ते अनायासेन। न च व्याकुलयति विस्माययति वा वर्षद्वयपरभाविदृश्यं सहसा प्रादुर्भूतं किञ्चन, अपि तु सर्व्वमेव प्रदीप्तसत्यवदाभासमानं विमोहयति मानसमिदं सर्व्वविधानामेव दर्शकानां; अत्रापि नैपुण्यमसाधारणं प्रतिभासते ग्रन्थकृतः।

कुमुदिनीकान्तकान्तो दान्तो धीरप्रशान्तो नाम नायकोऽस्य अप्रमत्तशादरुत्तः। यश्च सदाचाराणां प्रभवः, सुव्रतानामालयः, सुशीलानां निदर्शनं, अशरणानां शरणञ्च सुवर्णव्यवहारविहीनस्यापि सुवर्णा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



धीश्वरस्य, अप्रमत्तकरिणोऽपि दानार्णवस्य यस्य नाम समुत्पत्तिः संसाधयामास अवर्णनीयप्रभावस्य कर्णस्य दानैकधर्म्मस्य अपूर्णताम्।

यस्मिंश्च सपक्षता पक्षिणां, प्रार्थनानन्तरदातृत्वं कल्पपादपानां, कठोरता लौहानां, दूरवर्त्तित्वं मित्रमण्डलस्य, असरलता च शरासनानामेव समजनि। तेनैव तदीयगुणनिबद्धहृदयो विटः समग्रोज्जयिनीप्रतिभूपदमङ्गीकुर्व्वन्निव सावेगमुद्घोषयामास अस्य दिगन्तविस्तृतां प्रशस्तिवार्त्ताम्—

"दीनानां कल्पवृक्षः स्वगुणफलनतः, सज्जनानां कुटुम्बो।
आदर्शः शिक्षितानां, सुचरितनिकषः, शीलवेलासमुद्रः॥"

इत्यादि। आर्य्यधर्म्मैकशरणः धनिब्राह्मणसन्तानोऽसौ, विगतविभवसन्तानोऽपि, विनष्टैश्वर्य्यार्थं लेशतोऽपि अनुशोचनामकुर्व्वाणो वयस्यवाक्यप्रत्युत्तरेणोक्तवानासीत्—

"वयस्य! न ममार्थान् प्रति दैन्यं, पश्य—
एतत्तु मां दहति यद् गृहमस्मदीयं,
क्षीणार्थमित्यतिथयः परिवर्ज्जयन्ति।"

इत्यादिकं। न च पूर्व्वपरिचितैरतिथिभिरेव परिवर्ज्जितं तद्गृहं, अपितु सुचिरमसुलभाशनीयशतपरिपुष्टकलेवरा विश्वासैकनिलयाः सुहृदोऽपि दूरवर्त्तिनस्तदानीमित्यपि निरन्तरं पीड़यति स्म तमित्याह—

"सत्यं न मे विभवनाशकृतास्ति चिन्ता,
भाग्यक्रमेण हि धनानि भवन्ति यान्ति।" इत्यादि,

अपिच—"दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्व्वेदमापद्यते।" इत्यादिकञ्च।

भोगान्तरायतामवगाहते निर्धनतेति न कदापि दुःखितः सः। धनाभावतो महदुद्द्योग्यमसफलं भवति, बुद्धिः प्रलयं गच्छति, मनुष्यत्वमन्तर्धानमाधत्ते, नीचता चावलम्बते मनीषिणमपीति अगृह्ण्मपि धनप्रार्थिनं तमहो! व्यथयति स्म नितरां निर्धनता। किन्तु "स्वो-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुत्राणामोदृशाभावदशायां कस्तावद्भविष्यति जीवन-धारणोपाय:" अनार्य्यजनसुलभेयं हीनहीना भावना न कदापि समुदिता तन्मनसीति समुपपादयितुं प्रथमत एव तस्य आर्य्यभावबाहुल्यं सूचितं विवेकिना कविना।

तद्दु:खदु:खितहृदयेन मैत्रेयेण "यत एवं पूजिता अपि देवता न ते प्रसीदन्ति, तत् को गुणो देवेषु अर्च्चितेषु" एवं वैमनस्यसहकारेण उक्ते सति सदृढ़मभिहितं तेन—"वयस्य! मा मैवं गृहस्थस्य नित्योऽयं विधि:—

तपसा मनसा वाग्भि: पूजिता वलिकर्म्मभि:।
तुष्यन्ति शमिनां नित्यं देवता: किं विचारितै:॥"

सङ्कीर्णमरलोकमधिवसन्त एव आर्य्यसन्ताना एकविपुलपरलोकस्य आभासमुपलभमाना नैव निराशा म्लानानना: सञ्जायन्ते इह लोके इष्टोपासनाफलमनवलोकयन्तोऽपि। उत्तालतरङ्गसङ्घातसङ्कुलविपत्तिपारावारमध्यगतोऽपि न विस्मरति आर्य्यवंशप्रभव: स्वकीयं धर्म्मं सत्यञ्च; निष्कामतैवं नायकस्य शास्त्रशिक्षाप्रसूतैव।

संयमगुणसंयतस्वभावोऽमितप्रभाव: सोऽभिसारिकां वसन्तसेनामोचमाणो दुष्मन्तवदेवाभिहितवान् "न युक्तं परकलत्रदर्शन"मिति। तदीयां निर्लोभतां सत्यप्रियतामुदारताञ्च प्रत्यक्षीकुर्व्वत: कस्य न प्रसरति लालसाहो! स्वीकरणाय तदीयदासीभावस्य। मैत्रेयेण भूयसा प्रणोदितोऽपि अलङ्कारमञ्जूषापहरणानन्तरं दृढ़ं यदभिहितवानसौ अहमिदानीमनृतमभिधास्ये ?

"भैक्षेणाप्यर्ज्जयिष्यामि पुनर्न्यासप्रतिक्रियाम्।
अनृतं नाभिधास्यामि चारित्रभ्रंशकारणमि"ति॥

अनेन किमप्यसाधारणोपादानपरिगठितस्य तदीय-विशाल-वीरहृदयस्य सुस्पष्टं चित्रमनुभूतिविषयीभूतं कं न करोति प्रमोद-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुलकितम् ? सज्जनशिरोहीरो धीरः करुणाकरोऽसौ चमः सम्बभूव शरणागतजनपरिरक्षणाय निक्षिप्यात्मानमपि सर्व्वविधासु विपत्तिषु शरणागतमार्यकमुत्तोलयितुमपाराद्व्यसनपारावारात् अवश्यपालनीयं राजादेशमपि समवधीरयन् सदर्पमुक्तवानसौ—

"अपि प्राणानहं जह्यां न तु त्वां शरणागतम् ।"

मरलोकीकसाममरतैकद्वारं यशो नाम, महीयसां प्राणेभ्योऽपि गरीयस्तया सर्व्वप्रयत्नः प्रत्यर्पितो भवति सर्व्वदा तदक्षुस्सत।सम्पादन-विधौ—अतएव पिशाचप्रतिमस्य शकारस्य घृणितकौशलजाल-प्रयोगेण लब्धचरमराजदण्डेन कस्यचन सुखात् स्वनिर्द्दोषतामाकर्ण-यता साहसिकशिरोमणिना अमुना, शोचनीयदशायामपि तस्यां सानन्दमुच्चैरुच्चारितं—"भोः श्रुतं भवद्भिः—

न भीतो मरणादस्मि केवलं दूषितं यशः ।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत् ॥"

ततश्च यस्यैव कूटयन्त्रं शृगाल-सारमेयादीनामिव यस्यामूल्य-जीवनं चेष्टते स्म बहुधा निष्पेष्टुं, यश्च तदीयतुषारधवलयशोवसनं कल्पितकलङ्ककालिम्ना सलीलं मलिनयामास हताशः, यो हि अत-र्कितदावानलसमानो दुःशीलसमीरणसञ्चालितो भस्मीकर्त्तुं समुद्यम-मकरोत् स्वर्गीयशान्तिसुषमानिदर्शनं संसारकाननं, दुर्नयपारावारं तं शकारं प्रति शर्व्विलकेन पुनरुत्तेजितस्य बहुशः तस्य "अभयं शरणागतस्य" इति समुदारोक्तिः, कस्य किल दुर्वृत्तस्यापि चित्त-मभावनीयविस्मयरसविप्लुतं न सम्पादयति ? कं वा न मुखरीकरोति तन्महनीयमहत्त्ववार्त्ताकीर्त्तनविधौ ।

आर्य्याणामेषैव वीरता—धृष्टतासु उपेक्षा, अपकर्म्मणि घृणा, सत्येषु निष्ठा, शरणागतेषु दया, मरणे निर्भीकता, यशःसंरक्षणे प्रयत्नः, धर्म्मप्रभाविषु विश्वासः, परोपकारेषु स्पृहा प्रमापराधिषु क्षमा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



च सात्त्विकधीरता, इयन्तु ग्रन्थकृतो नैपुण्येन चारुदत्तचरिते परिस्फुटा।

( क्रमशः )

---

## गुरुशिष्य-संवादः।

### द्वितीय-प्रचारः

( लेखकः—श्रीकालीपदतर्काचार्यः )

गुरुः—वत्स, सुव्रत, अद्य ते विद्याग्रहणार्थमनवद्यो दिवसः। तद्-यावत् स्वाभिमतदेवतानमस्कारपूर्व्वकं सर्व्वविद्याप्रकृष्टां न्यायविद्या-मनुशीलयितुम् प्रवर्त्तस्व। येन सर्व्वविद्यासु विनायासं प्रवेशं लब्ध-वतस्ते कीर्त्तिकलापो जगति प्रकीर्णो भवेत्।

शिष्यः—भगवन्, जानामि यदध्ययनप्रारम्भे स्वाभिमतदेवता-नमस्कारः कर्त्तव्य इति, यतः पुरापि यदाहं व्याकरणाध्ययने प्रावर्त्तिषि, तदापि तथैव देवतानमस्कारपूर्व्वकमेव, नान्यथा। किन्तु कृत्यारम्भे देवतानमस्कारः कर्त्तव्य इति कुतो निश्चयः क्रियताम्, किं वा फलं तस्य नमस्कारस्य, किं वा नमस्कारस्वरूपम्? अकृते वा का हानिः? इत्येतानि सर्व्वाणि अविदितवतो नाद्य प्रवृत्तिरुपजायते तस्मिन् कर्त्तव्ये।

गुरुः—साधु वत्स, समीचीनं मन्त्रयसे, सर्व्वत्रैव प्रवृत्तिनिवृत्ती फलज्ञानमपेक्षेते, तच्च फलम् इष्टञ्चेत् प्रवृत्तिः, अनिष्टञ्चेत् निवृत्ति·

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रिति शास्त्रकाराः परिभाषन्ते, तदादौ यथोद्देशं श्रूयतां कुतो नमस्कारस्य कृत्यारम्भकर्त्तव्यता निश्चेया इति।

शिष्यः—एषः अवहितोऽस्मि, उपदिशतु मां भगवान्।

गुरुः—आदौ तावत् कृत्यारम्भे स्वाभिमतदेवतानमस्कारादिलक्षणं मङ्गलं वेदेन प्रतिपाद्यते कर्त्तव्यविधया, स च वेदो यद्यपि न शब्दत उपलभ्यते, तथापि शिष्टाचारपरम्परापर्य्यालोचनया मङ्गले वेदबोधितकर्त्तव्यत्वानुमानेन अनुषङ्गतस्तद्वेदवचनसिद्धिरिति निरूपणीयम्। तच्चानुमानमित्थम्, यथा मङ्गलं वेदबोधितकर्त्तव्यताकं अविगीतालौकिकशिष्टाचारविषयत्वादिति। यदेव वस्तु शिष्टैः परिपाल्यते, विगीतं लौकिकञ्च न भवति, तदेव वेदे कर्त्तव्यतया समुपदिष्टं भवतीति सामान्यव्याप्त्या मङ्गलस्य शास्त्रे अविगीतत्वात् अलौकिकत्वात् शिष्टपरम्पराचरणदर्शनाच्च वेदबोधितकर्त्तव्यताकत्वमुपलभ्यते। तत एव कृत्यारम्भे नाकृतनमस्कारेण प्रवर्त्तितव्यमित्यवधार्य्यते।

शिष्यः—गुरो, अनुमानमिति केयं वार्त्ता, यत्प्रभावेण ईदृशमप्रत्यक्षमपि वस्तु प्रत्यक्षायमाणं प्रतिपाद्यते, सरलया दिशा यदि प्रसङ्गतः किमपि निर्दिश्य प्रकृतवस्तुविज्ञानमनुकूलयति भवान्, तदेव मानसमलापसारो, नान्यथा।

गुरुः—वत्स, अनुमानमिति सूक्ष्मतया दुरधिगमः खल्वेष वृत्तान्तः, यस्यावलम्बनेन प्रायेण समग्रमेव नव्यन्यायशास्त्रं प्रसरति, यस्य कठिनतमनानाविदितव्यविषयविशेषस्पर्शेन नव्यन्यायशास्त्रस्य क्रमेण दुर्बोधता विलसति, तदिदानीं सामान्यतः तथा त्वामनुमानविषये विदिततत्त्वं करोमि, यथा आनुमानिकसामान्यविज्ञानमनायाससमुपतिष्ठेत। अनन्तरञ्च यथावसरं सूक्ष्मसमालोचनया विदिततत्त्वः करिष्यसे।

शिष्यः—अनुगृहीतोऽस्मि, आदिशतु मां भगवान्।

गुरुः—अनुमीयते येन तदनुमानमिति अनुपूर्व्वस्य माधातोः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



करणवाच्ये अनट् ( युट् ) प्रत्यये कृते अनुमानमिति पदं निष्पन्नं अनुमित्यात्मकज्ञानविशेषस्य कारणविशेषं प्रतिपादयति। अनुमितिश्च प्रत्यक्षानुमिति-शब्दोपमितिसंज्ञितेषु ज्ञानेषु अन्यतमा। सा च कारणीभूतं ज्ञानान्तरमपेक्षते व्याप्तिज्ञानसंज्ञितम्. आदौ व्याप्तिज्ञानं जायते, अनन्तरञ्च तद्बलेन अनुमित्यात्मकं ज्ञानमुत्पद्यते।

शिष्यः—गुरो, किञ्चिदुदाहरणमुपन्यस्य निरूप्यतां, अन्यथा नायं सुबोधो विषयः।

गुरुः—श्रूयताम्, प्रत्यहमेव वह्न्यधिकरणं महानसं पश्यसि, तत्र धूममपि जानासि, एवं यत्र यत्र धूमो दृश्यते, तत्र तत्र वह्निरस्तीति प्रत्यक्षतः समुपलभ्यते अनन्तरमेकदा कुत्रचिदन्यत्र पर्व्वतादौ धूममात्रमवलोकयतस्ते नूनमेवं प्रतीतिर्भवति, अयं धूमः न स्याच्च धूमो वह्न्यभाववति, अत्र च वर्त्तते, अतो वह्निरपि अस्तीति, तत्र यद्वह्निरस्तीति ज्ञानं, तदेव अनुमित्यात्मकं, यच्च धूम इत्यनन्तरं वह्निरस्तीति ज्ञानात् पूर्व्वञ्च नियमेन धूमो वह्न्यभाववति न स्यादिति अत्र च वर्त्तत इति ज्ञानमनुभवसिद्धं, तदेव तस्या अनुमितेः कारणज्ञानं, यद्धि पूर्व्वं अनुमानसंज्ञया समुपपादितमस्माभिः। एवं रीत्या यज् ज्ञानं जायेत, तत्रैव अनुमितिसंज्ञा प्रवर्त्तयितव्या। पक्षे वर्त्तमानो हेतुर्यदि साध्याभाववति न स्यात्, तदा तेन हेतुना जनिता अनुमितिर्न मिथ्या भवेत्; अत एव पर्व्वतो वह्निमान् धूमादिति प्रयोगेण संकलिता पर्व्वतो वह्निमानित्यनुमितिर्यथार्था, अयथार्था च ह्रदो वह्निमान् धूमादित्यादिप्रयोगकलिता, तत्र तस्य हेतोः पक्षे ह्रदे अवर्त्तमानत्वात्, तथैव चायथार्थानुमितिः जलं वह्निमत् जलत्वादित्यादिप्रयोगसम्बन्धिनी, जलत्वस्य हेतोः वह्निरूपसाध्याभाववति जले वर्त्तमानत्वादिति।

शिष्यः—गुरो, विज्ञातमिव किञ्चित्, इदानीमेतदेव पृच्छामि,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



के नाम ते पक्षसाध्यहेतुव्यपदेशमर्हन्तीति, यथा सरलया दिशा प्रतिपादितमुदाहरणं, तथैव यद्येतदपि प्रतिपाद्यते, तदा सन्देह-विनिर्म्मोकेण कृतार्थो भवेयम्।

गुरुः—वत्स, श्रूयताम्, पक्षतानिर्द्देशमधिकृत्य भूयांसो वादाः प्रचरन्ति, अतत्येन पक्षशब्देन हेतुदर्शनतो व्याप्तिं विज्ञाय यत्र किमपि वह्न्यादिकं साध्यते, तदेव अभिप्रेयते, पर्व्वतादिकं पक्षीकृत्य यदेव वह्न्यादिकं साध्यते, तदेव साध्यपदेन व्यपदिश्यते, यद्दर्शनात् पर्व्वतादौ वह्न्यादिरनुमीयते, स एव हेतुरिति संज्ञामर्हति। वस्तुतस्तु अनुमितंशे उद्देश्यत्वं विधेयत्वञ्च पक्षसाध्ययोः स्वरूपपरिचायकं, हेतोश्च पञ्चम्यन्त-पदोपस्थाप्यत्वम् इत्यादूहनीयम्। तथाहि पर्व्वतो वह्निमान् धूमा-दित्यादौ पर्व्वते अनुमितिनिरूपिताया उद्देश्यत्वाख्यविषयतायाः सत्त्वेन तस्य तादृशानुमितौ पक्षत्वम्, वह्नौ "पर्व्वते वह्निमनु-मिनोमि" इत्याद्यनुमित्यर्थकधातुयोगे द्वितीयार्थरूपाया अनुमिति-निरूपिताया विधेयतायाः प्रत्ययात् तस्य तादृशानुमितौ साध्यत्वम्, धूमस्य धूमादिति पञ्चम्यन्तपदोपस्थाप्यतया हेतुत्वमिति।

शिष्यः—तदिदानीं प्रकृते अनुमाने कीदृशी पद्धतिराश्रयणीया ?

गुरुः—प्रकृते "मङ्गलं वेदबोधितकर्त्तव्यताकं अविगीतालौकिक-शिष्टाचारविषयत्वादित्यत्र मङ्गलस्य अनुमितावुद्देश्यत्वात् पक्षत्वम्, वेदबोधितकर्त्तव्यताकत्वस्य तत्र विधेयतया भानात् साध्यत्वं अविगीता-लौकिकशिष्टाचारविषयत्वस्य पञ्चम्यन्तपदोपस्थाप्यत्वात् हेतुत्वम्। व्याप्तिस्तु प्रागेव उपपादिता।

शिष्यः—अथ मङ्गले वेदबोधितकर्त्तव्यताकत्वसाधने साधनांशे किमिति अविगीतेत्यादिविशेषणोपन्यासः कृतो भवता ? आचार-विषयत्वमात्रस्यापि हेतोः पक्षे मङ्गले सत्त्वेन तेनापि शक्या तत्र वेदबोधितकर्त्तव्यताकत्वानुमितिरुपपादयितुम् अलं व्यर्थविशेषणता-दोषसमाश्रयणेन।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरुः—मा मैवम्, नह्ययमुपन्यासो निष्फलः, परन्तु परमं फलमस्य समुपतिष्ठति विचारणया, तथाहि—न केवलं पक्षवृत्तिताशालिन एव हेतोर्विज्ञानेन प्रयोजिता अनुमितिः प्रमा भवति इत्युक्तमस्माभि किन्तु हेतोः साध्याभाववति अवर्त्तमानत्वमपि प्रयोजकमपेक्षते, अतएव ह्रदो वह्निमान् जलादित्यादौ पक्षे ह्रदे वर्त्तमानेनापि जलेन हेतुना साधिता ह्रदे वह्न्यनुमितिरयथार्था एव। प्रकृतेऽपि आचारविषयत्वमात्रस्य हेतुतया उपादाने तादृशस्य हेतोः पक्षे सत्त्वेऽपि वेदबोधितकर्त्तव्यताकत्वरूपसाध्यस्य अभाववति रात्रिश्राद्धादौ वेदाविहिते लौकिके भोजनशयनादावपि सत्त्वेन व्यभिचारदोषग्रस्तत्वात् व्याप्तिविघटनेन नानुमितेः स्वारसिकता इति गुरुतरविशेषणान्वेषणम्। तदुपादाने च रात्रिश्राद्धादेः विगीतत्वात् भोजनादीनाञ्च लौकिकत्वात् न व्यभिचारः।

शिष्यः—ननु, शब्दशास्त्रशिक्षणावसरे भवानुपदिष्टवान्, तव्यप्रत्ययेन धात्वर्थे कृतिसाध्यत्वमिष्टसाधनत्वञ्च समुपस्थाप्यते इति, तत्रैव मे प्रश्नद्वयी समवतरति—यथा कीदृशं वस्तु तत् मङ्गलं, येन कृतिसाध्यं, कीदृशञ्च तदिष्टं, यदनेन साध्यते वा? स्वरूपप्रतिपत्तिविरहे कृतिसाध्यत्वासाध्यत्वयोरेकतरनिश्चयविरहप्रसङ्गात् इष्टगतविलक्षणधर्माज्ञाने वा प्रवृत्तेरनुपपत्तेः।

गुरुः—वत्स, आदौ श्रूयतामस्य नमस्कारलक्षणस्य मङ्गलस्य स्वरूपं, येन कृतिसाध्यता तत्र न दुरधिगमा स्यात्। तथाहि स्वावधिकोत्कृष्टत्वप्रकारकबोधानुकूलव्यापारो नमस्कारपदार्थः। स्वं नमस्कर्त्ता पुरुषः, तदवधिकोत्कृष्टत्वप्रकारकनमस्कार्य्यविशेष्यको यो बोधः तदनुकूलव्यापार इत्यर्थः। स च व्यापारः, करकपालसंयोगादिः, तदवलोकनादेव नमस्कर्त्रपेक्षया नमस्कार्य्यस्य उत्कर्षबोधात्।

शिष्यः—अथ योऽयमुत्कृष्टत्वप्रकारको नमस्कार्य्यविशेष्यको बोधो नमस्कारलक्षणे प्रविष्टः, स कस्य? नमस्कर्त्तुर्वा, नमस्कार्य्यस्य,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्यस्य वा आत्मनि जायमानः, ? यदि नमस्कर्त्तुरात्मनि, तदा कर-कपालादिसंयोगात् प्रागेव तदात्मनि तस्य जननात् तेनैव च कर-कपालादिसंयोगादीनां जननेन तत्र तदनुकूलव्यापारत्वं नोपपद्यते। यदि च नमस्कार्य्यस्य, तदा तस्य अप्रत्यक्षं नमस्कारानुपपत्त्या मथुरास्थः काशीस्थं प्रणमतीत्यादौ नमस्कारपदार्थहानिः। अन्यस्य चेत्, केवल-नमस्कार्य्यनमस्कारकोभयसत्त्वे नमस्कारानिर्व्वाह इति सर्व्वतःपाशा रज्जुः।

गुरुः—वत्स, अवधेहि, स्वावधिकोत्कर्षबोधो नमस्कर्त्तुरात्मनिष्ठ एव, परन्तु नात्र स्वावधिकोत्कर्षबोधस्य अनुकूलव्यापार इति षष्ठी-समासः, किन्तु स्वावधिकोत्कर्षबोधोऽनुकूलव्यापारो यस्य तथाभूत इति बहुव्रीहिसमास एव। तेन स्वावधिकोत्कर्षबोधप्रयोज्यस्य कर-कपालादिसंयोगस्य स्वावधिकोत्कर्षबोधानुकूलव्यापारतालाभात् नानु-पपत्तिः। स चायं नमस्कारः कायिको वाचिको मानसिकश्चेति त्रिधा भिद्यते। तत्र कायिकः स्वावधिकोत्कर्षविज्ञानानन्तरं करकपाल-सम्बन्धादिरूपः। वाचिकः "नमो नमस्तेऽस्तु सहस्रकृत्व" इत्यादि वाक्योच्चारणरूपः, मानसिकः मनःक्रियाविशेषरूपः। सर्व्वमेवेदं श्रद्दधानेन मनसा क्रियमाणं परममेव फलं प्रसूते, अश्रद्दधानेन क्रियमाणन्तु न तथा इति विदितमास्तां श्रीमतः।

शिष्यः—गुरो, विदिततत्त्वोऽस्मि नमस्कारस्वरूपे निर्णीतवांश्च कृतिसाध्यतामस्य, श्रद्धानमानसता तु भवदनुग्रहाधीना। तदिदानीं कीदृशमिष्टमयं सम्पादयतीति श्रोतुमिच्छामि, यदि भगवान् सदय-मभिदधाति।

गुरुः—वत्स, मङ्गलं हि कृत्यसमाप्तिं प्रति कारणं, सति सम्भवे विघ्नध्वंसद्वारा तदिदं मङ्गलं समाप्तिरूपमेव इष्टं सम्पादयति। ये च मङ्गलाचरणं न समाप्तिं प्रति कारणं, किन्तु विघ्नध्वंसं प्रत्येव इति



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ब्रुवाणाः समाप्तिं कर्त्तृबुद्धिप्रतिभादिकारणकलापप्रयोज्यामवधारयन्ति, तेषां न युक्तः पक्षः, प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनः कारणतया प्रतियोग्यसम्भवे ध्वंसस्य असम्भवेन स्वतःसिद्धविघ्नविरहदशायामाचरितस्य मङ्गलस्य निष्फलत्वापत्त्या तत्कल्पनाया अशक्यत्वात्, अविगीतशिष्टाचारविषयत्वेन हेतुना मङ्गलाचरणस्य सफलत्वानुमानात्। प्रकृते मङ्गले यत् समाप्तिफलकत्वम् अभ्युपेयम्, तदपि समाप्तिफलकत्वमनुमानविशेषबलाद्‌व्यवस्थाप्यते, यथा मङ्गलं समाप्तिफलकम्, समाप्त्यन्याफलकत्वे सति सफलत्वात् यन्नैवं तन्नैवम्, यथा घट इति। यत् यत् समाप्तिभिन्नफलशून्यं अथच सफलं तत् तत् समाप्तिफलकम् इति व्याप्त्या अत्र समाप्तिभिन्नस्य फलस्य बाधसत्त्वात् तादृशविशिष्टसफलत्वहेतुना समाप्तिफलकत्वसिद्धेरप्रत्यूहता।

शिष्यः,—एवञ्चेत् नास्तिकादीनां कथमपि मङ्गलाचरणविधावप्रसजतां नास्तिक्यवादविपुला ग्रन्था न निष्पद्येरन्, मङ्गलाचरणरूपस्य समाप्तिकारणस्य विरहेण तत्कार्य्यभूताया ग्रन्थसमाप्तेरपि विरहप्रसङ्गात्, दृश्यन्ते च ते मङ्गलविरहेऽपि सर्व्वतः सुनिष्पन्ना इति कारणाभावेऽपि कार्य्यसत्त्वरूपो व्यतिरेकव्यभिचारः। किञ्च कादम्बर्य्यादौ सत्स्वपि सकलदेवतानमस्कारेषु ग्रन्थकर्त्तुः प्राणवियोगप्रयुक्तग्रन्थासमाप्तिदर्शनात् कारणसत्त्वेऽपि कार्य्यासत्त्वरूपान्वयव्यभिचारश्च इति कथं तस्य समाप्तिं प्रति कारणता कल्प्यताम्, अन्वयव्यतिरेकानुविधायित्वस्य कारणताकल्पकत्वात् इति, तत् किमत्र समाधानम् ?

गुरुः—वत्स, सत्यं नास्ति नास्तिकादीनां ग्रन्थेषु प्रारम्भे मङ्गलाचरणं, नापि तथान्यत् किमपि पुण्यकर्म्म, येन तदीयस्य ग्रन्थस्य समाप्तिरनुकूलिता स्यात्, किन्तु तेन जन्मान्तरेऽपि न कृतं मङ्गलाचरणं पुण्यकर्म्मान्तरं वा नैतत् शक्यं निर्व्वक्तुम्; तत् "समाप्तिकामो मङ्गलमाचरेत्" इति श्रुतिमूलकत्वान्मङ्गलाचरणस्य समाप्तिफलकत्वे अवधृते

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



समाप्तेषु नास्तिकादिग्रन्थेष्वपि समाप्तौ जन्मान्तरीयाणां मङ्गलाचरणादि-जन्यपरमापूर्व्वाणां प्रयोजकत्वमभ्युपेयम्, अतो नावतीर्णो व्यतिरेक-व्यभिचारः। यच्च कादम्बर्य्यादौ सकलदेवतानमस्कारसम्भवेऽपि अभिप्रेतस्यासिद्धिरिति, तत्तु समाप्तिप्रतिबन्धकविघ्नानां बलीयस्त्वात्, नहि प्रभवति पराभवितुमेकहायनो बालः सुपुष्टशरीरं केशरिराजम्, नापि कदाचिन्निरोद्धुमर्हति सैकतबन्धः प्रतीपप्रबलप्रवाहविषमां प्रस्रवन्तीं स्रोतस्वतीम्; तत्तत्र यावता प्रचुरतरेण मङ्गलाचरणेन समपनीयेत विघ्नराशिस्तावत् प्रचुरतरं नैव तदितीव कारणं ग्रन्था-समाप्तौ, अतएव विघ्नध्वंसस्य व्यापारविधया यत् सहकारित्वमुक्तं, तत् समाप्तिप्रतिबन्धकीभूतानां यावतां विघ्नानां ध्वंसस्यैव इति कल्पनात् नान्वयव्यभिचारोऽपि प्रकृते पदमाधत्ते। निपुणास्तु ध्वंसाप्रतियोगिना-मपि केषाञ्चन विघ्नानां सत्त्वे न यावतां विघ्नानां ध्वंसाप्रसिद्ध्या अनुप-पत्तिरिति समाप्तिं प्रति प्रतिबन्धकाभावमुद्रया विघ्नात्यन्ताभावः सह-कारी, मङ्गलाचरणञ्च स्वजन्यादृष्टवत्त्वसम्बन्धेन कारणम्, कार्य्यता-वच्छेदकसम्बन्धस्तु ग्रन्थसमाप्तिस्थले स्वप्रतियोगिचरमवर्णानुकूलकृति-मत्त्वम्, कारणताच्छेदकसम्बन्धघटकस्वपदं मङ्गलाचरणपरं, तज्जन्यस्य अदृष्टस्य धर्म्मापरनामकस्य आत्मनि धर्म्माधर्म्माश्रये सत्त्वात्, तेन सम्बन्धेन मङ्गलाचरणरूपस्य कारणस्य आत्मवृत्तित्वम्। तत्रैव चरम-वर्णध्वंसरूपायाः ग्रन्थसमाप्तेः कार्य्यतावच्छेदकसम्बन्धघटकस्वपदप्रति-पाद्यायाः स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वरूपपरम्परासम्बन्धेन सत्त्वात् कार्यकारणभावस्यात्मानमन्तर्भाव्य निर्व्वाहः, कृतेः प्रयत्ना-पराख्याया आत्मधर्म्मत्वात्, सम्बन्धसत्त्वस्य सम्बन्धिसत्त्वनियामकत्वात्। वस्तुतस्तु कार्य्यविशेषेण विघ्नानां विशेषत्त्वात् तत्तत्समाप्तिं प्रति तत्तद्-विघ्नध्वंसकूटस्य कारणत्वकल्पने यत्र ग्रन्थकर्तृमरणादिरूपविजातीय-प्राणवायुसंयोगध्वंसादेर्विघ्नस्य सम्भवस्तत्र तत्तद्ध्वंसाप्रसिद्ध्या कारण-त्वाभिमतध्वंसकूटाभावादेव कार्य्यानिर्व्वाहो न व्यभिचाराय। तादृश-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विघ्नाभावकूटसहितस्यैव मङ्गलाचरणस्य समाप्त्युपधायकत्वात् न केवलस्य तदनुपधायकत्वं दोषाय।

शिष्यः—अथ यत्र विघ्न एव नास्ति, तत्र तर्हि कार्य्यानिष्पादः, असति विघ्ने तद्ध्वंसासम्भवात्, तदसम्भवे च विशिष्टस्य मङ्गलाचरणस्य उपपादयितुमशक्यत्वादिति सकण्टकः पन्थाः।

गुरुः—मैवम्, सति विघ्ने तत्तद्विघ्नध्वंसकूटसहितस्य मङ्गलाचरणस्य, असति च केवलस्यैव समाप्तिसाधकत्वम् इति स्थलविशेषवशेन कार्य्यकारणभावविशेषाङ्गीकारात्। न च प्रतिबन्धकीभूतविघ्नविरहस्थले मङ्गलाचरणमनुपादेयमिति वाच्यं, बाधविरहस्थले परामर्शमपेक्षमाणाया अनुमितेरिव विघ्नविरहस्थलेऽपि समाप्तिप्रयोजकमङ्गलाचरणस्य अपेक्षणात्। जन्यमात्रं प्रति अदृष्टस्य कारणतया जन्यां समाप्तिं प्रति मङ्गलाचरणजन्यस्य अदृष्टस्य कारणताया अतिरोधानात्।

शिष्यः—अथ यत्र अपरैरेवादृष्टेन प्राक्तनेन समाप्त्यादिर्जन्यते विघ्नोऽपि नावशिष्यते, तत्र कथं मङ्गलाचरणं, कृतस्यापि वा न कथं वैयर्थ्यम् ?

गुरुः—तत्र हि समाप्त्यादिमूलीभूतस्य अदृष्टस्य अविज्ञानात विघ्नशङ्कया मङ्गलाचरणम्। अदृष्टादिकं परोक्षं कारणं कार्य्यदर्शनमन्तरेण नानुमातुं शक्यमिति तदानीं यावत् तत्फलोत्पत्तेरभावेन काम्यनिष्पादनमभिप्रेत्यैव विघ्नशङ्कया तदाचरणादिकं नातिविरुद्धम्. तथाहि "न हि अनुपस्थितपरिपन्थिभिः पार्थिवैः द्विरदयूथपतयो नाद्रियेरन्" इति किरणावल्याम् आचार्य्याः। तत्तत्र तत्र तेन तेन मङ्गलाचरणेन जनितः पुण्यातिरेकः कर्त्तव्यविधेः परतरामुत्कृष्टतामेव सन्निधापयते इति।

शिष्यः—गुरो, यद्येवं प्राक्तनेनापि मङ्गलाचरणेन शक्यो ग्रन्थसमाप्त्यादिरुपपादयितुं, तदा यन्मया व्याकरणाध्ययनवेलायां कृतं मङ्गला-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चरणं, तदपि मदभिप्रेतम् अनुकूलयितुमोष्टे, को वा अर्थः पुनर्मङ्ग-लाचरणेन ?

गुरुः—वत्स, नह्यसोमसामर्थ्यानि मङ्गलाचरणजन्यपुण्यानि, येन सर्व्वमेकमेव मङ्गलाचरणजन्यं पुण्यं सम्पादयेत्। परन्तु एकैक-मङ्गलाचरणजन्यपुण्यस्य निष्पाद्यं फलमेकैकमेव, धर्म्मत्वादिना सुखत्वाद्यवच्छिन्नं प्रति सामान्यकारणतासत्त्वेऽपि तद्धर्म्मत्वादिना तत्सुखत्वाद्यवच्छिन्नं प्रति कारणताया अवश्यक्लृप्तत्वात्। यद्वि मङ्गलाचरणं शब्दशास्त्राध्ययनप्रारम्भे विहितं, तस्य फलीभूतं शब्द-शास्त्राध्ययनसमापनम्, तदुत्पत्त्या एव तस्य अदृष्टस्य तन्मङ्गलाचरण-जन्यस्य विनाशात् स्वजन्यादृष्टवत्त्वसम्बन्धेन तन्मङ्गलाचरणं न साम्प्रतमप्यस्तीति कुतः कारणसत्ता ! अतएव अपेक्षितमिदानी-मपरं मङ्गलाचरणम्, यतो जातेन शुभादृष्टेन साम्प्रतिकप्रवृत्तिविषय-न्यायशास्त्राध्ययनमविघ्नं सम्पद्येत। मतिमालिन्यादिकमन्तरा नैव प्रतिबध्नीयात् सूक्ष्मतमतत्त्वप्रकाशसामर्थ्यम्।

शिष्यः—गुरो, ग्रन्थकर्त्तुर्नमस्कारस्थले निर्द्दिष्टो भवता नमस्कार-तत्फलयोः कार्य्यकारणभावः, विद्यार्थिकर्त्तव्यनमस्कारादितत्फलानां परस्परं कीदृशः स इति समुपदिश्य कृतार्थः क्रियतामेषः।

गुरुः—वत्स, नायमतिदुर्ब्बोधोऽर्थः। पूर्व्वकल्पालोचनादेष कल्पः सुगम एव, तथाहि अध्ययनं बोधविशेषः, तस्य आत्मनि समवायेन वृत्तेः, समवायेन तादृशबोधविशेषं प्रति स्वजन्यादृष्टवत्त्वसम्बन्धेन मङ्गलाचरणं कारणमिति नमस्कर्त्तृगतोद्देश्यभेदेन स्थलविशेषे कार्य्य-कारणभावविशेष आश्रयणीयः। तादृशबोधविशेषं प्रतीत्यत्र विशेष-पदं निरवशेषतादृशबोधग्राहकम्, अन्यथा यत्किञ्चिदेकदेशविज्ञानस्य सर्व्वत्रैव विघ्नसत्त्वस्थलेऽपि सम्भवेन मङ्गलाचरणमनुपादेयं स्यात्।

शिष्यः—अथ तर्हि सामान्यतो मङ्गलाचरणस्य समाप्तिफलकत्व-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मनुपपन्नम्। प्रकृते मङ्गलाचरणस्य बोधविशेषात्मकाध्ययनफलकत्व-प्रतिपादनात्।

गुरुः— मैवं, बोधस्य समाप्तिः तद्विषयकनिःशेषबोध एव, यदि कश्चिद् ब्रवीति समाप्तस्ते शब्दशास्त्रार्थबोध इति, तदा शब्दशास्त्रस्य नापरं ज्ञातव्यमवशिष्यते इत्येव प्रतीयते, न तु तादृशबोधस्य प्रध्वंसाभावः, अतएव 'समाप्तविद्यो गुरुदक्षिणार्थी" इत्यादि कविवचनमपि नासमञ्जसं प्रतिभाति। परे तु अध्ययनं न बोधविशेषः, किन्तु बोधविशेषप्रयोजकव्यापार एव तन्मते यादृशपूर्व्वापरीभूतव्यापारकलापेन निरुक्तबोधविशेषः समुत्पद्यते, तादृशपूर्व्वापरीभूतव्यापारकलापप्रध्वंस एवाध्ययनसमाप्तिः, तादृशस्य व्यापारकलापस्य समुत्पद्य प्रध्वंसे अवश्यमेव निरुक्तबोधविशेषोत्पादात् तथैव च मङ्गलाचरणकृतामभीष्टफलनिष्पत्तेः प्रयत्नसाफल्यात् तादृशसमाप्तिरेव विद्यार्थिकृतमङ्गलफलम्। तत्र स्वप्रतियोगितादृशचरमव्यापारानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रति स्वजन्यादृष्टवत्त्वसम्बन्धेन मङ्गलाचरणं हेतुरिति वदन्ति। एवं तत्तद्विषयविशेषेषु कार्य्यकारणभावविशेषादयोऽनुसन्धेयाः।

शिष्यः- गुरो, नमस्कारादीनां फलमशेषेण विज्ञातवानस्मि, अकृते का हानिरित्यपि नावतरति साम्प्रतं पर्य्यनुयोगः, अन्वयव्यतिरेकपर्य्यालोचनेन मङ्गलाचरणविरहे अभिप्रेतस्य फलस्य अनुत्पादरूपाया हानिरनायासमेवाधिगमात्। किन्तु सत्सु कृत्यफलाय नमस्कार्य्येषु देवताशतेषु कतमो देवो नमस्कार्य्यः कतमः परिहार्य्यो वेति संशयितोऽस्मि।

गुरुः—वत्स, अलं संशयेन, नमस्क्रियतां सर्व्वशक्तिमान् सकलदेवताशरीराधिष्ठाता परमात्मा, यस्मिन् नमस्कृते ब्रह्मविष्णुमहेश्वरादीनां सर्व्वेषामेव नमस्कारो निष्पन्नो भवेत्, अतएव नव्यन्यायपरमाचार्य्यो भगवान् रघुनाथशिरोमणिरपि तत्त्वचिन्तामणिदीधितिसमा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रम्भे "प्रारिप्सितग्रन्थसमाप्तिपरिपन्थिप्रत्यूहव्यूहविध्वंसपटीयसीं परमेश्वरप्रणति" मेव शिष्यशिक्षार्थं निबबन्ध । तत्रैव ॐमित्यस्य परमात्मविशेषणतया विन्यासेन ओम्पदप्रतिपाद्यब्रह्मविष्णुमहेश्वराणाम्परमात्मनि अभेदप्रत्यायनात् "समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्" इति बहुतरतत्साधकसत्त्वाच्च एकस्य परमात्मन एव नमस्कारः सकलदेवतानमस्कारफलानि प्रसूते इति प्रतिपद्यते ।

शिष्यः—तदेष परमात्मानं नमस्यामि—

ॐ नमः सर्व्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ।

भगवन्, इदानीं भवद्वन्दनाया अवसरः—

"अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥"

गुरुः—साधु वत्स, इदानीमवसरस्ते प्रकृत-न्यायतत्त्वविज्ञाने, तदवधेहि ।

शिष्यः—अवहितोऽस्मि । उपदिशतु भगवान् सानुग्रहम् ।

( क्रमशः )

---

## दुर्गेशनन्दिनी ।

( लेखकः श्री........... )

### द्वादशपरिच्छेदः ।

गजपतिविद्यादिग्गजस्य मनोमोहिनी आगमानी कीदृशी रूपवतीति विज्ञातुं कौतूहलिनः पाठकमहाभागा इत्यत्र नास्ति सन्देहः । अत एव तेषां कामनां पूरयेयम्, किन्तु स्त्रीणां सौन्दर्य्यवर्णनायां यथा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पद्धतिमवलम्बन्ते ग्रन्थकृतः, मादृशस्याकिञ्चनजनस्य तत्पद्धतिबहिर्भावः सुतरां धृष्टतैव, अतः प्रथमतो मङ्गलमाचरितव्यम्।

हे वाग्देवि, हे कमलासने, शरदिन्दुनिभानने, अमलकमलदलनिन्दितचरणे भक्तजनवत्सले, दीयतां मे चरणकमलयोराश्रयः, अहमागमानीरूपं वर्णयिष्ये।

हे अरविन्दाननसुन्दरीकुलगर्व्वपराभवकारिणि, हे विशालशालदीर्घसमासपटलसृष्टिकारिणि, सकृत् दीयतां पदं एकस्मिन् पार्श्वे पदनखराणां, अहं रूपं वर्णयिष्ये। समासपटोलैः सन्धिवार्त्ताकुभिः उपमाकदलीभिश्च वाक्ञ्जनविशेषं निष्पाद्य एतत् कृशरान्नं तुभ्यं समुत्सृजेयम्। हे पण्डितकुलेप्सितपयःस्राविणि, कदाचित् मूर्खजनकृपाकारिणि, हे अङ्गुलिकण्डूयनविषमविकारसमुत्पादिनि, हे वटतलाख्यस्थानविद्याप्रदीपतैलप्रदायिनि, सकृत् प्रदीपय मे बुद्धिप्रदीपिकाम्। जननि, द्विविधं ते रूपम्। येन रूपेण भवती कालिदासाय वरं विसृष्टवती। यस्याः प्रकृतेः प्रभावेण रघुवंशं कुमारसम्भवं मेघदूतं अभिज्ञानशकुन्तलञ्च संजज्ञिरे, याञ्च प्रकृतिमभिध्याय वाल्मीकिना रामायणं, भवभूतिना उत्तररामचरितम्, भारविना च किरातार्ज्जुनीयं नाम काव्यानि विरचितानि,तेन रूपेण मामधिकृत्य मा पीड़ितं कार्षीः। यां मूर्त्तिमनुचिन्त्य श्रीहर्षो नैषधीयचरितं विनिर्म्ममे, यत्प्रकृतिप्रसादेन भारतचन्द्रो विद्याया अपूर्व्वरूपवर्णनेन वङ्गानां मनो मोहयामास, यत्प्रसादेन दाशरथिरायः समजनि, सा मूर्त्तिरद्यापि वटतलाख्यं पदमलङ्करोति, सकृत् तया मूर्त्त्या समधिकुरु माम्, अहं आगमानीरूपं वर्णयिष्ये।

आगमानिकायाः फणिनीव शोभते वेणीति फणिनी तेन सन्तापेन 'यदि वेण्याः पराभवः प्राप्तः, तदलं पुनरिमं देहमाश्रित्य लोकसमीपे विचरितुम्, विलमेव प्रविशामि' इति, विभाव्य प्रविष्टा फणिनी विलमेव। ब्रह्मणा अहो अत्याहितम्, भुजङ्गजातिर्विलं प्रविष्टा, को

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नाम मानवान् दर्शयेत्? एवं विचिन्त्य भुजङ्गजातिः पुच्छे समाकर्षता बहिरानीता, सापि बहिरागतय पुनरपि मुखं प्रदर्शनोयमिति चोभेण शिरः कुट्टयितुम् व्यापृता, कुट्टयमानञ्च मस्तकं प्रसृतमभूत्, ततः प्रभृति सर्पजातिः फणिनी समजनि। आशमानीमुखचन्द्रः सुतरां सुन्दर इति चन्द्रदेवः समुदेतुमसमर्थः पितामहस्य समीपे अभियोग-मुपास्थापयत्। ब्रह्मणोक्तं मा भैषीः, गच्छ, समुदयं लभस्व, अद्य प्रभृति स्त्रीणामाननमवगुण्ठितं भवेत्, तदवधि प्रवृत्तमवगुण्ठनम्। नेत्रे खञ्जनाविव, यदि विहङ्गी पक्षोद्भेदेन समुत्पतेताम्, इति धाता नेत्रपत्रे पञ्जरकवाटौ व्यधात्। नासिका गरुड़नासिका इव सुविशालेति विलोक्य गरुड़ः शङ्कया वृक्षमारूढ़वान्, ततः प्रभृति पक्षिकुलं वृक्षमेव समधितिष्ठति। कारणान्तरेण दाड़िमानि वङ्गान-पहाय पाटलिपुत्रप्रदेशे निभृतं व्यतिष्ठन्त। हस्ती कुम्भसहायो ब्रह्म-देशम् अभिप्रतस्थे। अवाशिष्यत धवलगिरिः, सोऽपि मेने यथा कियत् समुन्नता वा मम चूड़ा, सार्द्धक्रोशतस्तु नातिरिच्यते, इयन्तु चूड़ा क्रोशत्रयादनूना स्यात्। एवं विचिन्तयतो धवलगिरेः शिरः समुच्चतां दधार, हिमानीसेकः समारब्धः, ततः प्रभृति स शिरसि हिमानीं विन्यस्य सन्तिष्ठते।

ललाटलेखदोषात् आशमानी विधवा, आशमानी दिग्गजकुटीर-मागत्य व्यलोकयत् कुटीरद्वारं संवृतम्, अन्तश्च प्रदीपो ज्वलतीति, आमन्त्रयच्च—"अयि देव" इति।

न कोऽपि प्रत्यवोचत।

"अयि प्रभो"। नास्ति प्रतिवचनम्।

"आः किमध्यवस्यति धूर्त्तवटुः? अयि रसिकराज रसोपाध्याय प्रभो!"

नास्ति प्रतिवचनम्। आशमानी कुटीरकपाटरन्ध्रेण निभृत-मपश्यत्, ब्राह्मणो भोजनार्थम् उपाविशत्, तत एव प्रतिवचनं नास्ति।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वचने प्रयुक्ते ब्राह्मणस्य भोजनं न स्यात्। आश्रमानी व्यचिन्तयत्, अस्यापि पुनर्नैष्ठिकता, पश्येयं वचनं प्रयुज्य पुनरयं भुञ्जीत न वा "अयि भो रसिकराज !"

नास्ति प्रतिवचनम्। "अयि रसराज"

प्रतिवचनम् "हुम्" इति।

आश्रमानी व्यचिन्तयत्, ब्राह्मणवटुरन्नं मुखाभ्यन्तरे कुर्व्वन् उत्तरं प्रतिपद्यते, न तु जातमिदं वचनम्, अब्रवीच्च अयि रसमाणिक्य !

प्रतिवचनं "हुम्" इति।

आश्र—अयि भोः, वचनमुच्यताम्, अतःपरं भोक्तव्यम्।

प्रतिवचनम्—हुम्—उम्—उम् !

आश्र—अथैवम् ? ब्राह्मणस्य व्रत ईदृशं कृत्वा अद्य एव अहं भगवते स्वामिने निवेदयिष्ये। कोऽसौ गृहाभ्यन्तरे ? ब्राह्मणः सशङ्कचित्तः शून्यस्य गृहस्य चतुष्पार्श्वमभिवीक्षितुमारेभे। नास्ति कोऽपीति पर्य्यवेक्ष्य पुनर्भोजनव्यापृतोऽभूत्।

आश्रमानी प्राह—"अहं प्रत्यभिजानामि, यदसौ दास्याः पुत्री जात्या चाण्डाली।" दिग्गजस्य मुखं शुष्कतां दधार, (असौ) अकथयत्—"का चाण्डाली ? अपि न स्पृष्टो जातः ?"

आश्रमानी प्राह,—"कथम् ? पुनरपि भक्षयसि ? वाचं प्रयुज्य पुनरपि भक्षयसि ?"

दिग्गजः—कुतः ? कदा वचनं प्रयुक्तम् ? आश्रमानी समुच्चैर्विहस्य प्राह—इदं ननु प्रयुक्तम्।

दिग्गजः—एवम्-एवम्-एवम् तत् न पुनर्विघटितं भोजनम्।

आश्र—यद्येवम्, तदुत्थाय मे द्वारमपावृणु। आश्रमानी रन्ध्रेण विलोकयन्ती आसीत्, यथा ब्राह्मणो याथार्थ्येनैव भोज्यं परित्यज्य समुत्तिष्ठति—अथाकथयत्—नहि, नहि, अमूनि कतिपयमात्राणि अन्नानि भुक्त्वा समुत्तिष्ठः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिग्गजः—मा तावत्, पुनर्भोजनं विघटितम् [ यतः ] वचनं प्रयुक्तवानस्मि ।

आश—मम शिरोभोजनेन शापितोऽसि ।

दिग्गजः—राधे माधव, प्रयुक्तवचनेन किं भोक्तव्यम् ।

आश—एवमिदम् ? तदहं गच्छामि । आसीत् त्वया सह मम प्रचुरतमानां मानसभाववचनानां व्यपेक्षा, किञ्चिन्मात्रमपि न संघटितम् । तदहं गच्छामि ।

दिग्गजः—न हि, न हि, आशमानिके, मा कोपं कार्षीः, एषोऽहं भक्षयामि । ब्राह्मणः पुनर्भोक्तुमारेभे । यावदेव कवलिताः तेन द्वित्रा ग्रासाः, तावदेव आशमानी प्राह—उत्तिष्ठ, सम्पन्नम्, उद्घाटय कपाटम् ।

दिग्गजः—एतान् कतिपयमात्रानोदनान् भक्षयानि ।

आश—उदरं ननु कथमपि न पूर्य्यते ।. उत्तिष्ठ अन्यथा वाचमुच्चार्य्य भक्तं भुक्तमिति प्रकाशयिष्ये ।

दिग्गजः—आः, का गतिः ? एष उत्थितोऽस्मि । ब्राह्मणः सुतरां दुःखितेन मनसा अन्नं परिहाय गण्डूषजलं पीत्वा समुत्थितो द्वारमपावृणोत् ।

द्वादशपरिच्छेदः समाप्तः ।

---

## त्रयोदशपरिच्छेदः ।

### आशमानीप्रणयः ।

द्वारे समुद्घाटिते यावदेव आशमानी गेहं प्राविशत्, तावदेव दिग्गजो बुबुधे, प्रणयिनी समागता, अस्याः सरसमभिनन्दनं कर्त्तव्यमिति, अत एव हस्तमुत्थाप्य प्राह—"ॐ आयाहि वरदे देवि" इति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



आशमानी प्राह—कवितेयं हि सुतरां सरसा, कुतः प्राप्ता ?

दिग्गजः—त्वदर्थमिमाम् अद्य विरचय्य समासादितवानस्मि।

आशमानी—किमु स्वैरवत्या त्वं रसिकराज इत्यभिहितोऽसि ?

दिग्गजः—सुन्दरि, आस्यताम्, यावदहं करं प्रक्षालयामि।

आशमानी मनस्यकरोत्—"आः अल्पायुः! त्वं करं प्रक्षालयेथाः ? अहं त्वां पुनरपि उच्छिष्टमदो भोजयिष्ये। प्रकाशमाह च—कथमिव ? कथं करः प्रक्षाल्यते ? अन्नं भुज्यताम्।

गजपतिराह—कीदृशमहो वचनम् ? भुक्त्वा समुदतिष्ठं, पुनः कथं भक्तं भुञ्जीय ?

आशमानी—कथं ? भवतो भक्तमवशिष्यते। उपवासं कुर्य्याः ?

दिग्गजः किञ्चिद्दुःखितः प्राह—किं क्रियताम् ? त्वया महती त्वरा कृतेति सतृष्णलोचनश्च भक्तं द्रष्टुमारेभे।

आशमानी प्राह—पुनरपि भोक्तव्यम्।

दिग्गजः—राधे माधव, गण्डूषजलं पीतम्, गात्रमुत्थापितम्, पुनर्भोक्तव्यम् ?

आशमानी—अथ किम्, भोक्तव्यम्, किमन्यत् ? मद्भुक्तावशेषो भोक्तव्यः। एवमुक्त्वा स्वयं आशमानी भोज्यपात्रादेकमन्नग्रासमादाय बुभुजे। ब्राह्मणो विस्मितः समतिष्ठत।

आशमानी भुक्तावशेषमन्नं भोज्यपात्रे निधाय प्रोक्तवती—"ननु भुज्यताम्" नास्ति ब्राह्मणस्य वचनस्फूर्त्तिः।

आशमानी—शृणु, भुङ्‌क्ष्व, न कस्यापि कथयिष्यामि, यत्त्वं मद्भुक्तावशेषमभक्षय इति, केनचिदनधिगतञ्चेत् को वा दोषः ?

दिग्गजः—किमु तथा स्यात् ?

किन्तु दिग्गजस्य उदराभ्यन्तरे देवो वैश्वानरः प्रचण्डज्वालया प्रज्वलितोऽभूत्। दिग्गजः मनस्यकार्षीत् यत् आशमानी यथैव वा सुन्दरी भवतु, वसतु तावदिमां पृथिवी, यथाहं रहसि अस्या भुक्ताव-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शेषसन्नमभ्यवहृत्य दह्यमानमुदरं निर्व्वापयेयम् । आयमानो भाव-मनुभूय प्राह—भुङ्क्तां, न वा, सकृत् पात्रपार्श्वमध्यास्ताम् ।

दिग्गजः—कथम्, किं तेन सम्पद्येत ?

आशमानो—मम मनोरथः, किं त्वया न शक्यो मम एको मनोरथः पूरयितुम् ?

दिग्गजः—किंवा केवलेन पात्रपार्श्वाधिष्ठानेन ? तेन नास्ति कश्चित् दोषः ? पालितं ते वचनम् ।

एवमुक्त्वा दिग्गजपण्डित आशमानोवचनेन पात्रपार्श्वमध्यासाञ्चक्रे ।

उदरे क्षुधा, क्रोड़े चान्नम्, किन्तु न शक्नोति भोक्तुम् ।—दिग्गजस्य चक्षुषोरश्रु समुद्भिन्नम् । आशमानी प्राह—शूद्रोच्छिष्टे ब्राह्मणेन स्पृष्टे किं स्यात् ?

पण्डितः प्राह—स्नातव्यं स्यात् ।

आशमानी—त्वं मयि कीदृशं स्निह्यसि इत्येतदद्य सम्यक्तया विज्ञाय निवर्त्तेय । त्वं मम वचनेन अस्यां रजन्यां स्नातुं शक्नोषि ?

दिग्गजमहात्मा क्षुद्रं लोचनं रसेनार्द्धनिमीलितं विधाय दीर्घां नासां वक्रीकृत्य कृत्वा च मधुरमाकर्णहसितम् प्राह—का कथा तस्य ? इदानीमेव स्नातुं शक्नोमि ।

आशमानी प्राह—मम मनोरथो जातः, तव पात्रे भुक्तावशेषं भोक्तुम् । त्वं स्वेन करेण मृदितं कृत्वा कियद्भक्तं मे दीयताम् ।

दिग्गजः प्राह—कस्तत्र विस्मयः ? स्नानेनैव शौचम् इति । ततः भुक्तावशेषं सङ्गमय्य मर्द्दयितुमारेभे ।

आशमानी प्राह—एकमुपन्यासं कथयामि, श्रूयताम्, यावदहमुपन्यासं कथयेयं, तावत् अन्नं त्वया मर्द्दनीयम् । अन्यथा नाहं भोक्ष्ये

दिग्गजः—एवमस्तु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



आशमानी एकस्य राज्ञः सुभगा दुर्भगा चेति तदीयमहिष्योश्च प्रबन्धं वक्तुमारेभे। दिग्गजः स्थिरदृष्ट्या तन्मुखमभिवीक्षमाणः श्रवणव्यापृतो बभूव भक्तमर्द्दनपरश्चासीत्। शृण्वतो दिग्गजस्य मानसमाशमानीप्रवर्त्तिते प्रबन्धे निरीक्षणे नासाकटकान्तरे च निरुद्धमभूत्।

प्रतिरुद्धमन्नमर्द्दनम्, लग्नः पात्रे करः,किन्तु क्षुधा वक्ष्यासुपहरति। यदा आशमानिकाया उपन्यासः सुतरां गाढ़भावतां दधार, तदा दिग्गजस्य चित्तं तत्र परं निविष्टमभूत्। तदा दिग्गजस्य करो विश्वासघातकताम् आचचार, पात्रनिहितः करः सन्निहितमर्द्दितभक्तकवलमुत्तोल्य रहसि दिग्गजाननं निनाय। मुखं आत्मप्रसारणेन तद्ग्रहणमकरोत्। दन्ता निरापत्तिकं तत्कवलं निष्पेष्टुमारेभिरे, रसना तं कण्ठादधः सारयामास, निरीहस्य दिग्गजस्य किमपि ज्ञानं नावर्त्तिष्ट। दृष्ट्वा आशमानिका सशब्दं विहस्य प्राह--अय रे धूर्त्तक, न भोक्तव्यं त्वया ननु मदुच्छिष्टम् ?

तदानीं दिग्गजेन चेतना प्राप्ता। सत्वरं अपरमेकं ग्रासं मुखे प्रक्षिप्य कण्ठादधः सारयन् उच्छिष्टस्पृष्टेन करेण आशमानीचरणौ परिवेष्टितवान्। क्रियमाणचर्व्वणश्च विलपन् आह—"आशमानिके, परित्रायस्व माम्, कस्यापि नो कथयेथाः।"

त्रयोदशपरिच्छेदः समाप्तः।

---

## दर्शन-काव्यम्।

( लेखकः—श्रीगोपीचन्द्रस्मृतितीर्थः )

नाम्नेयं प्रकृतिर्यैव तस्या विकृतिरेव हि।
कथमत्रोच्यते लोकैर्धिग् जड़त्वं सहस्रशः ॥१॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकृतिश्च प्रधानञ्च नाम्ना या परिकीर्त्त्यते।
यस्याः कार्य्यं महत्तत्त्वं तत्र दोषोऽपि विद्यते ॥२॥
जड़ेयं प्रकृतिः कर्त्री ह्यजड़ो निष्क्रियः पुमान्।
निशाकरो यथा चन्द्रः सूर्य्येऽप्यस्तं गते सति ॥३॥
जड़ः कर्त्ता चितेर्बिम्बात् पदार्थः कापिलं मतम्।
निशाकृच्छशभृद्‌यस्मात् सूर्य्यबिम्बानुबिम्बितः ॥४॥
महतां प्रकृतौ नाम सत्त्वादीनां समानता।
सांख्याचार्य्यनयो नूनं दृष्टान्तः प्रकटो मतः ॥५॥
सत्त्वाधिक्येऽपि वैषम्ये दुःखस्यैव निदानता।
महत्तत्त्वादहङ्कार आविरासीद् भयङ्करः ॥६॥
तमःप्रधानप्रकृतौ मूढ़ताया निदानता।
तन्मात्रादिह भूतानि जड़ीभूतानि जज्ञिरे ॥७॥
जड़ाज्जातं महत्तत्त्वं ततो जाता त्वहंकृतिः।
मूर्खाद्विद्वांस्ततो मूर्खः संसृतेर्गतिरीदृशी ॥८॥
प्रकृतेर्दोषयुक्तायाः प्रधानं नाम यन्मतम्।
विद्यमाने परे पुंसि सत्यं सुनिरनङ्कुशः ॥९॥
अहङ्कारस्य जनको जड़भूर्विकृतस्तथा।
स महानुच्यते लोकैर्यथान्धः पद्मलोचनः ॥१०॥

---

## विविध-कथा।

( लेखकः—श्रीहरिचरणविद्यारत्नः )

### १। विश्वविद्यालयसभ्यनिर्द्देशने हर्षः।

विचारपतेः श्रीयुक्तस्य आशुतोषसरस्वतीमहोदयस्य सुयोग्यः पुत्रः श्रीमान् रमाप्रसादमुखोपाध्यायः एम्-ए-बि-एल् इत्युपाधिकः सम्प्रति विश्वविद्यालयस्य साधारणः सभ्यः सञ्जातः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



२। निर्द्देशने आपत्तिः।

रायोपाधिकः श्रीयुक्तयतीन्द्रनाथचतुर्धुरीण श्रीयुक्तसुरेन्द्रनाथ-रायस्य वङ्गीयव्यवस्थापकसभायां सदस्यतया निर्द्देशने आपत्तिं विधाय आवेदनमेकं कृतवान्। तेन वङ्गशासनकर्त्ता आलिपुरविचारालयस्य कमिकाख्यं विचारपतिं तथा व्यवहाराजीवौ श्रीयुक्तनीरदचन्द्र-चट्टोपाध्यायनीलमणिमुखोपाध्यायौ अभियोगस्य अनुसन्धानार्थम् नियुक्तवान्। अभियोगफलदर्शनाय समुत्सुका वयम्।

३। जार्म्माणवाणिज्यतरी।

सम्प्रति शर्म्मण्यदेशीयपण्यपरिपूरितम् अर्णवयानमेकं शर्म्मण्य-देशात् कलिकातायां समुपस्थितम्। पाश्चात्यदेशीयतुमुलसंग्रामस्य अवसानात् परं शर्म्मण्यवाणिज्ययानस्य इदमेव प्रथमं शुभागमनम्।

४। असाध्यसाधनम्।

जगति परिदृश्यमानेषु सर्व्वेषु पर्व्वतेषु हिमालय एव उच्चतमः। यतः अस्य सर्व्वोच्चं गौरीशृङ्गं तावत् विंशतिसहस्रहस्तप्रमाणम्। इंलण्डप्रदेशीयराजकीयभौगोलिकसम्प्रदायस्य केचन सभ्याः भारतवर्ष-मागम्य गौरीशृङ्गमारुह्य असाध्यमपि साधयिष्यन्ति। इति तु हिन्दु-स्थानपत्ते प्रकाशितम्। सत्यं चेत्—कदा वा एते उत्तरमेरुलङ्घनेन मेरुज्योतिराविष्करिष्यन्ति।

५। पशुशालालोपाशङ्का।

पाश्चात्यप्रदेशे नानामतावलम्बिनो विविधाः सम्प्रदाया विद्यन्ते। तेषु कश्चित् सम्प्रदायः प्राणिनां मध्ये कस्य मांसं उत्कृष्टम् इति परीक्षार्थं समुद्यतः। असौ सम्प्रदायः सर्व्वेषामेव जीवानां मांसं परीक्षते। अस्य सम्प्रदायस्य सर्व्वग्रासिनी रसना सिंहव्याघ्रहस्त्यश्व-वराहकुक्कुरमार्ज्जारमूषिककुम्भीरप्रभृतीनां मांसमपि न वर्ज्जयति। इति तु हिन्दुस्थानपत्ते प्रकाशितम्। शङ्के—यद्यसौ सम्प्रदायः कदा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चित् कलिकातामहानगर्य्यां आगमिष्यति। तदा अस्य सम्प्रदायस्य मांसपरीक्षाफलेन क्रमशः पशुशाला विलुप्ता भविष्यति।

६। जीवे दया।

भारतवर्षस्य हितैषी बन्धुः कर्णेल ओयेजउड् सम्प्रति पाश्चात्य-प्रदेशात् भारतवर्षमागतः। असौ "अहिंसा परमो धर्म्मः" इति मतावलम्बी। एकदा असौ वस्त्रखण्डेन मस्तकस्य एकदेशं बद्ध्वा पार्लामेण्टमहासभायां समागतः। सर्व्वदा विवादादिरतैः अमजीविभिः सह यस्य कार्य्यं स कदाचित् विवादादिशान्तये गत्वा आहतः इति तत्रत्यैः सर्व्वैरेव तं दृष्ट्वा अनुमितम्। परं पृष्टेन तेन उक्तं द्विचक्रयानेन आगमनकाले कश्चित् मार्ज्जारशावकः यानस्य तलदेशे निपतितः। तमेव रक्षितुं चेष्टमानेन मया एष आघातः प्राप्त इति।

---

## ७यामिनीनाथ-महाप्रयाणम् ।

( लेखकः श्रीहेमेन्द्रचन्द्रव्याकरणतीर्थः )

अहह ! किमिदमद्य स्वप्नतोऽपि व्यतीतं
घटितमिह नितान्तं दुःसहं मर्म्मभेदि !
अपि सकलकलावान् पूर्ण-भावानकाले
प्रचलति सहसास्तं "यामिनीनाथ" एषः ॥ १

विबुधसमितिजिष्णो ! सौम्य सर्व्वज्ञशीर्ष-
मुकुट ! गुणिमनोऽब्धिप्रीतिदायिन् ! द्विजेश !
अतुलगुणनिधान ! ज्ञानपीयूषपूर्ण !
भुवनविततकीर्त्ते ! पूर्व्ववङ्गैकरत्न !



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चिरमतलसमुद्रे मज्जयन् वङ्गभूमिं
घनतिमिरवितानैश्छादयन् दिग्विभागम् ।
अमृतरसपिपासून्नन्धयन् नम्रकोरान्
बुधकुमुदसमूहानर्दयन् क्वासि यातः ? ( युग्मकम् )

दीना हीनतमाद्य वङ्गजननी त्वद्वैरहं दुःसहं
शोकावेगमहो कथं नु शमयेत् ! कस्त्वां पुनः प्रच्यति ?
किं तस्याः परिसान्त्वनेऽस्ति ? वत सा जीवेत् कथं भूतले ?
कोऽप्येको गुणवान् वरं हि तनयः किंवा शतैर्निर्गुणैः ? ॥ ५

व्रज बुध ! सुरलोकं युज्यते ते तदेव,
सततविगतदुःखं नित्यमानन्दपूर्णम् ।
दिशतु कलुषहन्त्री जाह्नवी मुक्तिमार्गं,
अभिमतपदलाभात् शाश्वती शान्तिरस्तु ॥ ६

---

## संस्कृतसाहित्यं भारतवासी च ।

( लेखकः—श्रीरासविहारिरायः )

अतो यथा बालकः क्रमेण मननशक्तिम् प्राप्नोति, तथा स क्रमेण तत्प्रकाशकालं शब्दानामपि आवश्यकतामनुभवति । यदि स बालकः भिन्नभाषायां शिक्षामधिगच्छति, अर्थान्मननाय भिन्नभाषायां तं शिक्षयेत्, तदा तस्य शिक्षा भिन्नजातीयैव भवेत् । तस्य जातीया शिक्षा कदापि भवितुं नार्हति, ईदृश्या च शिक्षया बालकस्य विचार-परिष्फुरणं भिन्नजातीयकमेव भवेत्, बालको यथा यथा मननशक्तिं प्राप्नोति, तथा तथा स क्रमेण तत्प्रकाशिकानां वैदेशिकशब्दावलीनां साहाय्येन अभावम्पूरयितुं कृतप्रयत्नो भवेत् । अत ईदृशी शिक्षा कदापि जातीया भवितुं नार्हति । एतदपि सर्व्वथा स्मर्त्तव्यं यत् सङ्कल्पविकल्पादिविचारः शब्दानामुत्पादकः, तथा शब्दादेव सङ्कल्प-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विकल्पादिविचारः प्रादुर्भवेदिति। यथा सङ्कल्पविकल्पादिविचारात् शब्दानामुत्पत्तिः, तथा क्रियाप्रतिक्रियानियमानुसारेण शब्दोऽपि सङ्कल्पविकल्पादिविचाराद्रुत्पादमङ्गीकरोतीति। यतः तादृशक्रिया-प्रतिक्रियानियमानुसारेण सङ्कल्पविकल्पादिविचारोऽपि भिन्न-जातीयक एव भवेत्, किन्तु जातीयको नैव भावीति। इत्थमनया विजातीयशिक्षया विजातीयसङ्कल्पविकल्पादिविचारप्रबलतया च भारतीयजनसमाजे कश्चित् शोचनीयो भेदभावः समन्तात् सङ्गठितः। अनेन च भेदेन नवीनस्य कस्यचित् वैदेशिकभावापन्नस्य समाजस्य उद्भवः समभवत्। एतेषामाचारप्रभृतयः सुतरां विभिन्नदिशैव प्रवर्त्तमानाः परिलक्ष्यन्ते। आलापपरिचयादयश्च एतेषां वैदेशिक-भावापन्नानां नवीनाङ्गलसमाजानां सभ्यपदवीमध्यासीनैर्मानवसमूहै-रेव भवति आङ्गलशिक्षाविमुखेन स्वदेशिभावापन्नमानवेन सह तेषाम् इयन्मात्रोऽपि सम्बन्धः प्रीतिश्च न परिलक्ष्येरते। न वा भारतवासिनः स्वदेशिभावापन्ना मानवाः तैः सह कमपि सम्बन्धविशेषं रचितु-मभिप्रयन्ति। वर्त्तमानभारतीयसमाजस्य ईदृशी शोचनीया अवस्था निखिलभूमण्डलानां कुत्रापि न परिलक्ष्यते। बालकानां कल्पनावली असंशयम् अस्य मनोवृत्तेः अर्थात् सङ्कल्पविकल्पादिविचारस्य अनु-सारेणैव प्रवर्त्तते। बालकस्य प्रवृत्तिनिवृत्तिरागद्वेषादयः सर्व्वेऽपि भावा विचाराश्च तादृशा एव भवेयुः, यथा स शिक्षितः समभूत्। यदा कस्या अपि जातेः नाशविवरणं विवक्षितं भवेत्, तदा ईदृशः अभिप्रायः कदाचिदपि अवगमनार्हो न भवेत्, यदस्याः जातेः कोऽपि जनः जगति न वर्त्तते इति। प्रत्युत अस्य ईदृशः अभिप्रायो भवेत्, यदस्या जातेः सङ्कल्पविकल्पविचारादीनां नाशः सञ्जात इति। अथवा अन्य-प्रकारेण एवमपि वक्तुं युज्यते, यत् येन कारणेन सा जातिः पृथिव्यां वर्त्तमाना आसीत्, तस्य चिह्नं नाशमुपगतमिति। या या प्राचीना जातिः वर्त्तमानसमये मृतेति निश्चीयते, तासु स्वशरीरविद्यमानतया-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जीविता एव वर्त्तन्ते, किन्तु अनेन कारणेन ता मृता इति उच्यन्ते, यत् वर्त्तमानसमये तासां मध्ये तादृश एकोऽपि जनः न परिदृश्यते, यः तस्या जातेः सङ्कल्पविकल्पविचारं प्रकाशयति। या सभ्यता तान् अपरापरजातेः पृथक् विशिष्टांश्च अकार्षीत्, निखिलभूमण्डले तस्याः परिपूर्णोऽभावो वर्त्तते। तस्या लेशतोऽपि कुत्रापि विद्यमानता नावलोक्यते। प्राचीनसिरीयजातिः रणवीर्येण बुद्धिमत्तया जगतः शीर्षस्थानं अध्यकार्षीदिति।

प्रतिवेशिनां जात्या सह सम्मेलनेन, देशान्तरादौ च निवासेन, सिरीयदेशे च अपरापरदेशवासिनामुपनिवेशसंस्थापनेन भाषायाः परिवर्त्तनात् सिरीयजातिः शारीरिकविद्यमानतया जीवितापि मृतेव जनसमाजे प्रतीयते। अत्र चायमस्माकमिदानीं प्रश्नः, यदीदृश-वैदेशिकशिक्षाप्रचारेण जातीयजीवननिभस्य अमृतसरसः शोषविधानं किं देशहितैषिता उताहो विद्वेषितेति। एवमीदृशीं शिक्षां किं जातीयशिक्षा इति वक्तुमर्हेदुत तद्विपरीतां वैदेशिकशिक्षामिति। न चास्माकमीदृशः सिद्धान्तः कदापि, यद्विभिन्नभाषायाः शिक्षा प्रचारश्च सुतरामेव निषिद्धो, तथा भिन्नजातीनां भिन्नदेशानाञ्च सद्विचारणं सिद्धान्तश्च नानुकार्य्यं, न वा सर्व्वथैव ग्रहीतुमयोग्यं। अथवा यया यया उन्नत्या ते मानवीयभावानां साहायकमकार्षुः, तया तया उन्नत्या स्वदेशस्य भावान्वयविधानमनुचितमिति। परमस्माभिरेवमेव कथ्यते यदस्माभिः आङ्गलभाषां वर्त्तमानफरासीय-पदार्थ-विद्यां दर्शनविद्यां गृहविद्यां नीतिविद्याञ्च अभ्यसितुं सर्व्वदा यत्नवद्भिर्भवितव्यमिति। यूरोपवासिनो जनसमूहाः किं न भिन्नप्रकारां भाषामभ्यस्यन्ति, नवा प्राच्यविद्यामनुशीलयन्ति? अत्र केवलमेतदेव द्रष्टव्यम्, यत् किं कापि यूरोपीया जातिर्व्वयमिव शिक्षां विजातीयामकार्षीत्? यदि ता विजातीयभावेन प्राच्यविद्यायां शिक्षामुपगच्छति, तदा वयमपि कथं वा पाश्चात्यविद्यायां वैदेशिकभावेन विजातीयभावेन वा अधीतिनो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवेम । अतः जातीयभावेन शिक्षाधिगमाय निखिलभारतवर्षे प्रधान-भाषारूपेण संस्कृतभाषां प्रचारयितुं प्रयत्नपरैरस्माभिर्व्वर्त्तितव्यमिति ।

निखिलभारतवर्षस्य जातीयसाहित्यतया संस्कृतसाहित्यसार्व्वत्रिक-
प्रचारोपयोगितायां प्रथमा युक्तिः समाप्ता ।
समाप्तश्चायं प्रथमोऽध्यायः ।

---

परमाराध्यतमसुगृहीतनामधेय-पितृदेव ७हरचन्द्र-
तर्कपञ्चाननमहोदयस्य स्वर्गतौ

## शोकोच्छ्वासः ।

१ । हा हा तात कुतो गतोऽसि सहसा त्यक्त्वा सुतान् दुःखितान्,
विद्यामन्दिरवासिनो न च ततो लब्धावकाशानिमान् ।
शोकाम्भःपरिषिक्त-वक्त्र-हृदयान् त्वद्वक्त्रदत्तेक्षणान्,
कार्य्याकार्य्यविवेकहीनमनसः संसारचाराक्षमान् ॥

२ । आ बाल्यात् परिपालयन्ननुपदं पित्रा वियुक्तान् शिशून्
भ्रातॄन् भ्रातृसुखेच्छुरेष बहुशः क्लेशेन धीबान्धवः ।
दारिद्र्यानललोलदृप्तरसनाग्रस्तोऽपि दीप्त-प्रभो
विद्यासागरपारमाप जगतां पूज्यः पवित्रान्तरः ॥

३ । भित्तौ केशचयं निबध्य सुकृती रज्ज्वा रजन्यां दृढ़ं,
निद्रां रोद्धुमनाः सदा समभवत् पाठस्य संरोधिनीम् ।
यत्नाद्रत्नमुपैयते कृतधियामित्यं वचः संस्मरन्
देहीवाध्यवसाय एष सुमतिर्मग्नः स्मृतावम्बुधौ ॥

४ । विश्वस्मिन् जनशर्म्मसाधनकृते कृत्वा सुदीर्घं श्रमम्,
लब्धा ज्ञानमनन्तमत्र मनुजैर्दुर्ज्ञेयतत्त्वं स्वतः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शिष्येभ्यो बहुमानतश्चिरतरं संस्थाप्य विद्यालयम्
प्रादाद्वित्तमिव स्वयत्ननिचितं चित्वा तु चेतोगृहात् ॥

५। विद्यागेहमभि स्वकीयसदनाद् गच्छन् पथा सर्व्वदा
योऽसौ पाठरतः समीक्षितुमपि क्षौणीं क्षणं न क्षमः।
दृष्ट्वा तुष्टिमुपागमत् स कथयन् चेष्टां प्रसन्नो गुरुः
श्रेष्ठत्वं सुकृते ततो भवति नो नूनं दवीयस्तव ॥

६। माहात्म्यं नियतं जनेषु विकिरन् चन्द्रः सुधांशूनिव
पद्भ्यां राम इव भ्रमन् बहुमतः पार्व्वत्यदेशं मुदा।
तीर्थं सर्व्वमयं गतः कृतमतिर्भूयः स दारान् श्रितो
धर्म्यं कर्म्मचयं नयेन बहुधा श्रद्धायुतोऽसाधयत् ॥

७। गाम्भीर्य्याच्चिरनिर्जितोदकनिधिः कारुण्यवारांनिधिः
शास्त्रज्ञाननिराकृताशनस-धीः सज्ज्ञानपूतः सुधीः।
भक्त्या सङ्गतशङ्कराङ्घ्रिकमलस्वान्तः प्रशान्तः शुचिः
श्रीविष्णोर्मधुराभिधानरसभुग्जिह्वो महात्मा गुरुः ॥

८। मीमांसादिविचित्रशास्त्रमवनौ बुद्धेः प्रभावात् स्वतो
दृष्ट्वा ज्ञानमयं महानधिगतो दानेन भूकीर्त्तितः।
वाचं वाक्पतिपूजितामहरहर्योऽभाषतानीहया
सोऽयं पण्डितमण्डलीस्तुतगुणः स्वर्गं गतः साम्प्रतम्

९। लोको यच्चरणारविन्दयुगलं भक्त्या दिदृक्षुः सदा ॥
गेहे तदुपेत्य सत्यवचसो वाचं शृणोत्यादरात्।
आर्षं तत्त्वमिवाप्रयत्नगदितं यस्योपदेशामृतं।
पातुं चातकवद् विभाति पुरतः पश्यं स्वदीयाननम्

१०। गेहे प्रत्यहमेव पूजितशिलाचक्रस्ततो निर्गतः ॥
प्रायः क्रोशचतुष्टयाध्वगमनाद् विद्यागृहं यत्नतः
प्राणानां पतनं यथा न भवति श्रेयस्तथा चिन्तयन्।
यत्नेनैव महानयं समभजद्रत्नानि शास्त्रार्णवात् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



हा तात धर्म्मादनपेतबुद्धे,
धर्म्मार्थमोक्षप्रविदां वरिष्ठ !
ब्रह्म त्वया सङ्गतमेव मुक्त्यै
श्रेयः प्रकर्षैकफलं परं यत् ।
दीनास्त्वदीया वयमद्य मूढ़ाः
पुत्रा हि रूढ्यर्थमिहाश्रयन्तः ।
प्रफुल्लपद्मोपमरम्यवक्त्रं
न द्रष्टुमर्हाः किमुतान्यदुःखम् ॥

हतभाग्यस्य
श्रीकृष्णप्रसन्नदेवशर्म्मणः (काव्यव्याकरणस्मृतिसांख्यतर्कतीर्थस्य)

---

## परिषत्सन्देशः ।

माघस्य चतुर्व्विंशतिमिते रविवासरे सायं सार्द्धपञ्चमघटिकायां पण्डितश्रीयुक्तद्वारिकानाथन्यायशास्त्रिमहोदयस्य सभापतित्वेन परिषद एतन्मासिकसाधारणाधिवेशनमभूत् । तत्र च मृतानां तत्रभवतां हरचन्द्रतर्कपञ्चानन,-सुरेशचन्द्रसमाजपति,-रूढ़मलगोयेन्का, सिद्धेश्वरवन्द्योपाध्यायमहाशयानां कृते श्रीयुक्तकृष्णप्रसन्नकाव्यव्याकरणसांख्यस्मृतितर्कतीर्थप्रमुखपण्डितवर्य्याः, परिषदन्तेवासी श्रीमान् धीरेन्द्रमोहनभट्टाचार्य्यश्च शोकप्रकाशम् अकार्षुः । तेषाञ्च महात्मनां परिषदि चित्ररक्षाप्रस्तावः समुपातिष्ठत, समर्थितश्च श्रीयुक्तनगेन्द्रनाथसिद्धान्तरत्नेन । ततश्च सभायाः नित्यकृत्यसमासौ श्रीयुक्तजानकीनाथसाहित्यशास्त्रिमहाशयेन "शाक्यसिंहात् प्राक् बौद्धधर्म्मः" इति शीर्षकः प्रबन्धः पठितः । श्रीयुक्त अनन्तकृष्णशास्त्रिश्रीयुक्तसीतानाथसिद्धान्तवागीशप्रमुखानां पण्डितानां तत्र समालोचना रमणीयैव

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रावर्त्तत। सभापतेर्धन्यवादानन्तरं रात्रेरष्टमघटिकायां सभाभङ्गो जातः।

श्रीमन्तः परिषत्सभ्यमहोदयाः! प्रायो वर्षत्रयं यावत् परिषत् पत्रिकेयं मासि मासि भवतां समीपमुपेत्य काञ्चित् काञ्चित् वार्त्तां प्रकटयति। मन्ये न तेन तत्रभवतां भवतां संस्कृतसाहित्यरसपिपासूनां पिपासां पूरयितुं सम्यक् क्षमेयमिति सानन्दमानन्दसंदेशमिमं भवत्सु समुपहारीकरोमि। यथा गौड़ीयप्रधानधर्म्माधिकरणस्य ( High Court ) महामान्येन अधिकरणिकवरिष्ठेन पाश्चात्यपण्डिततिलकेन उड्रफमहोदयेन काचिद्रचना पौषमासीयपत्रिकायां प्रकाशिता। परं आशान्विताश्च वयं तेन, यथा प्राय एव स प्रबन्धादिप्रदानेन आनन्दयिष्यति महाभागान् अनुग्राहकग्राहकवर्गान्, आशास्यते च पुनर्दृष्टान्तेनानेन निमीलितदृष्टीनां अस्मद्देशीयानां पण्डितमण्डलीनामपि दृष्टिः प्रकाशीभविष्यति, तेन च पत्रिकेयं सर्व्वसमृद्धिसङ्गता सुधीजनहृदयग्राहिणी भवितेति।

---

## आङ्गलभाषाध्यायिच्छात्राणामभ्युदयः।

सम्प्रति चित्तूराङ्गलकलाशालायां कश्चित् समाजः "आङ्गलविद्यार्थिगैर्व्वाणवाणीपोषकः" इति नाम्ना प्रतिष्ठापितः।

अवान्तरोद्देश्येषु अनेकेष्वपि सत्सु छात्राणामध्ययनरतिश्चारित्रसम्पादनमित्युभयमेव मुख्यमस्योद्देश्यम्। महदिदम् उद्देश्यम्, भगवत्कृपया सज्जानानां कृपादृष्टिपातेन च सर्व्वथा सफलं सम्पद्यताम् इत्याशास्महे।

यया कयाचिद्दिशा भवतु विद्याया एवोन्नतिरित्येवास्माकम् आनन्दकारणं सुमहदिति।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

বঙ্গদেশের মহামান্য গবর্ণর বাহাদুর অনারেবল লরেন্স জন্ লাম্‌লে ডাণ্ডাস্ আর্‌ল্ অব্ রোনাল্ডসে জি, সি, আই, মহোদয় ঢাকা শক্তি ঔষধালয়ের কারখানা পরিদর্শন করিয়া যে অভিমত লিখিয়াছেন তাহার বঙ্গানুবাদ ঃ—

"আমি ১৯২০ সনের ১৭ই জুলাই তারিখে ( ঢাকা ) শক্তি ঔষধালয় পরিদর্শন করিয়াছি এবং ঔষধালয়ের স্বত্বাধিকারী বাবু মথুরামোহন চক্রবর্ত্তী, বি, এ, আমাকে কারখানার সকল বিভাগই দেখাইয়াছেন। আমি যাহা যাহা দেখিলাম, তাহাতে অতিশয় আকৃষ্ট ও আনন্দিত হইলাম। কারখানায় এত বহুল পরিমাণে আয়ুর্ব্বেদীয় ঔষধ প্রস্তুত হয় দেখিতে পাইয়া আমি বিস্ময়াবিষ্ট (astonished) হইয়াছি। ধাতুঘটিত এবং উদ্ভিজ্জাত ঔষধের প্রস্তুতকরণ অতি পূর্ণবেগে চলিতেছিল এবং বহুসংখ্যক কবিরাজ ঐ কার্য্যে নিযুক্ত ছিলেন। এরূপ বিস্তৃতভাবে বিশুদ্ধ ঔষধাদি প্রস্তুত করিয়া জনসাধারণ, এমন কি নিতান্ত দরিদ্র লোকদিগকেও যথাসম্ভব অল্পমূল্যে ঔষধাদি ব্যবহারে সুযোগ দেওয়াই অধ্যক্ষ মহোদয়ের উদ্দেশ্য। এই কারখানার সংশ্লিষ্ট একটী সংস্কৃত টোলও প্রতিষ্ঠিত আছে। সেই টোলে ২০ জন ছাত্র খাওয়া, পরা, বাসস্থান ও অধ্যাপনা বিনা ব্যয়ে পাইয়া থাকে এবং তথায় দর্শনশাস্ত্র ও আয়ুর্ব্বেদশাস্ত্র শিক্ষা দেওয়া হয়।

"বাবু মথুরামোহন চক্রবর্ত্তী প্রাচীন আয়ুর্ব্বেদশাস্ত্রের ব্যবস্থানুযায়ী ঔষধাদি প্রস্তুত করিয়া, ঔষধগুলির চরম উৎকর্ষসাধনে সমর্থ হইয়াছেন বলিয়া আমার বিশ্বাস এবং তিনি এই কার্য্যে যে সাফল্য লাভ করিয়াছেন, সেই সফলতার তিনি সম্পূর্ণরূপে উপযুক্ত পাত্র। আমার আশা এবং দৃঢ় বিশ্বাস যে, তাঁহার এই অভিনব কার্য্যোদ্যম উত্তরোত্তরই অধিকতর সাফল্যের দিকে চিরদিন অগ্রসর হইতে থাকিবে।"

ঢাকা
১৭।৭।২০ ( স্বাক্ষর )—রোণাল্ড্‌সে।

(১) শক্তি-ঔষধালয়ের কারখানা স্বামীবাগ রোড, ঢাকা। (২) হেড অফিস পটুয়াটুলী ষ্ট্রীট, ঢাকা (৩) কাশীব্র্যাঞ্চ দশাশ্বমেধ ঘাট, বেণারসসিটি (৪) রঙ্গপুর ব্র্যাঞ্চ রঙ্গপুর (৫) কলিকাতা হেড আফিস ৫২।১ বিডন ষ্ট্রীট কলিকাতা (ঐ) বড়বাজার ব্র্যাঞ্চ ১৩৪নং হ্যারিসন্ রোড (৭) শিয়ালদয়ের মোড়, ব্র্যাঞ্চ ১২৪নং বৌবাজার ষ্ট্রীট কলিকাতা (৮) ভবানীপুর ব্র্যাঞ্চ ৭৪।১ রসারোড কলিকাতা। টেলিঃ—শক্তি ঢাকা।

ক্যাটলগের জন্য পত্র লিখুন
অধ্যক্ষ—
শ্রীমথুরামোহন চক্রবর্ত্তী।
ঢাকা।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

অনিষ্টকর দ্রব্যবর্জ্জিত—

**শেফালী নস্য।**

গুণে অদ্বিতীয়, গন্ধে মনোরম, মূল্য সুলভ।
মস্তিষ্কপীড়ায় বিশেষ উপকারী।
মূল্য ১০ তোলার টিন ।৴০ আনা; ২০ তোলার টিন ।৷০ আনা।
জে, গাঙ্গুলী—বি, এ; বি, টি। ১৭৩।৩(১) কর্ণওয়ালিস ষ্ট্রীট, কলিকাতা।

## PRICE—REDUCED!

**Fountain Pens**:—Swan—ordinary Rs. 4/8/-, Safety Rs 5/8/-; Waterman—Ideal Rs. 9/-, Self-filling Rs. 9/-; Black-bird—Rs. 2/12 (Rs. 7/8/- for three); Gravity Stylo—Rs. 2/- (Rs. 5/8/- for three); Apollo—Rs. 2/4. Clips As. 4, As. 8 each.
**Razors**:—Kropp Rs. 4/-, Butler Rs. 2/4, Rodgres Rs. 1/4/-, Wilkinson Rs. 2/8/-, Gillet Safety Rs. 10/. Extra blade Rs. 2/- per doz., Shaving Soap As. 8, Strop, ordinary 1/-, 1/8; Superior Rs. 2, 3, 4. Shaving brush As. 8, 12
**Pocket Electric Lamp**—With battry—Rs. 5/ Postage Extra

Manager, **CHHATRA SURHIT AGENCY**
173/3(3) Cornwallis St., Cal.

J. CHATTERJEE'S

## INK TABLETS.

Packed in Coloured & printed fancy Tins.
Highly spoken of by the leading Merchants and the educated public!
PLEASE TRY AND BE CONVINCED!!

**PRICE:**

| | | | |
|---|---|---|---|
| Binapani Blu-black | ... | Rs. 1 4 | per gross. |
| " Red ... | ... | " 1 6 | " |
| Bani Blu-black | ... | " 0 15 | " |
| " Red ... | ... | " 1 2 | " |
| Shree Blu-black | ... | " 6 12 | " |
| Aurora Blu-black | ... | " 0 9 | " |

High Commission for big orders.

## ANTISEPTIC TOOTH POWDER.

The most wonderful tooth-preserver—an infallible cure for tooth-ache and all akin diseases. Price—As. 4. per tin. " . Rs. 2-8 per dozen.

## DADLIN.

A great anti-ringworn specific—Cure ringworm, itches and all sorts of skin-diseases. Price—As. 4. per tin. " Rs. 2-8 per dozen.

**BINAPANI INK STORE.**
173/3(3), Cornwallis Street, Calcutta.

The world-renowned Panacea of the Ayurveda—
The Hindu Pharmacopaea.

## MAKARADHWAJA

(Svarna-Sindur).
Prepared with the purest ingredients including gold.
Purity guaranteed.
Price:—1 doze 1 a, 7 dozes 6as, ¼ tola Rs. 1/4/-, ½ tola Rs. 2/4/-, 1 tola Rs. 4/-; Postage extra.

J. Ganguly—B. A., B. T.
Manager, **BISWA DRUG STORE**
173/3(2) Cornwallis Street, Cal.

पुस्तकालय
गुरुकुल कांगड़ी
०४०५१३

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

